लाभवेत् ॥ वस्त्रपुच्छंनजानातितृथातस्यपरिश्र
मः ॥ ४२ ॥ गायत्रींतुपरित्यज्य अन्यमंत्रमुपा
सते ॥ सिद्धान्नंचपरित्यज्यभिक्षामटतिदुर्मतिः
॥ ४३ ॥ ऋषिछंदोदेवताख्याबीजशक्तिश्चकी
लकम् ॥ नियोगंनचजानाति गायत्रीनिःफलाभ
वेत् ॥ ४४ ॥ वर्णमुद्राध्यानपदमावाहनविस
र्जनम् ॥ दीपंचक्रंनजानातिगायत्रीनिःफलाभ
वेत् ॥ ४५ ॥ शक्तिन्यासस्तथास्थानंमंत्रसंबोध
नंपरम् ॥ त्रिविधंयोनजानातिगायत्रीनिःफला
भवेत् ॥ ४६ ॥ पंचोपचारकांश्चैवहोमद्रव्यंतथै

वच ॥ पंचांगंचविनानित्यंगायत्रीनिःफलाभवेत् ॥ ४७ ॥ मंत्रसिद्धिर्भवेज्जातुविश्वामित्रेणभाषितम् ॥ व्यासोवाचस्पतिर्जीवस्तुतादेवीतपःस्मृतौ ॥ ४८ ॥ सहस्रजप्त्वासादेवीह्युपपातकनाशिनी ॥ लक्षजाप्येतथातच्चमहापातकनाशिनी ॥ कोटिजाप्येनराजेन्द्रयदिच्छतितदाप्नुयात् ॥ ॥ ४९ ॥ नदेयंपरशिष्येभ्योह्यभक्तेभ्योविशेषतः ॥ शिष्येभ्योभक्तियुक्तेभ्योह्यन्यथामृत्युमाप्नुयात् ॥ ५० ॥ इतिश्रीमद्वशिष्ठसंहितायांगायत्रीकवचंसम्पूर्णम् ॥

॥ अथ गायत्रीपंजरस्तोत्रम् ॥

भगवंतंदेवदेवंब्रह्माणंपरमेष्ठिनम् ॥ विधातारंवि
श्वसृजंपद्मयोनिंप्रजापतिम् ॥ १ ॥ शुद्धस्फटि
कसंकाशंमहेन्द्रशिखरोपमम् ॥ बद्धपिंगजटा
जूटंतडित्कनककुंडलम् ॥ २ ॥ शरच्चंद्राभवदनं
स्फुरदिन्दीवरेक्षणम् ॥ हिरण्मयंविश्वरूपमुपवी
ताजिनावृतम् ॥ ३ ॥ मौक्तिकाभाक्षवलयस्तंत्री
लयसमान्वितः ॥ कर्पूरोद्धूलिततनुःस्रष्टुर्नयनवर्ध
नम् ॥ ४ ॥ विनयेनोपसंगम्यशिरसाप्रणिपत्य
च ॥ नारदः परिपप्रच्छदेवर्षिगणमध्यगः ॥ ५ ॥

नारदउवाच ॥ भगवन्देवदेवेशसर्वज्ञकरुणानि
धे ॥ श्रोतुमिच्छामिप्रश्नेनभोगमोक्षैकसाधनम्
॥ ६ ॥ ऐश्वर्यस्यसमग्रस्यफलदंद्वंद्ववर्जितम् ।
ब्रह्महत्यादिपापघ्नंपापाद्यरिभयापहम् ॥ ७ ॥ शि
देकंनिष्कलंसूक्ष्मंनिरंजनमनामयम् ॥ यत्तेप्रि
यतमंलोकेतन्मेब्रूहिपितर्मम ॥ ८ ॥ ब्रह्मोवाच ॥
शृणुनारदवक्ष्यामिब्रह्ममूलंसनातनम् ॥ सृष्ट्या
दौमन्मुखेक्षिप्तंदेवदेवेनविष्णुना ॥ ९ ॥ प्रपंचबी
जमित्याहुरुत्पत्तिस्थितिहेतुकम् ॥ पुरामयातु
कथितंकश्यपायसुधीमते ॥ १० ॥ सावित्रीपंज

रंनामरहस्यंनिगमत्रये ॥ ऋष्यादिकंचदिग्वर्णं
सांगावरणकंक्रमात् ॥ ११ ॥ वाहनायुधमंत्राढ्यं
मूर्तिध्यानसमन्वितम् ॥ स्तोत्रंशृणुप्रवक्ष्यामि
तवस्नेहाच्चनारद ॥ १२ ॥ ब्रह्मनिष्ठायदेयंस्या
ददेयंयस्यकस्यचित्॥ आचम्यनियतःपश्चादा
त्मध्यानपुरःसरम् ॥ १३ ॥ ओमित्यादौविचिं
त्याथव्योमहेमाब्जसंस्थितम् ॥ धर्मकंदगतज्ञा
नमैश्वर्याष्टदलान्वितम् ॥ १४ ॥ वैराग्यकर्णिका
सीनांप्रणवग्रहमध्यगाम् ॥ब्रह्मवेदीसमायुक्तांचै
तन्यपुरमध्यगाम् ॥ १५ ॥ तत्त्वहंससमाकीर्णां

गा० शब्दपीठेसुसंस्थिताम्॥ नादाबिंदुकलातीतांगोपु
४९ रैरुपशोभितां॥ १६ ॥ विद्याविद्यामृतत्वादिप्रका
रैरभिसंवृताम् ॥ निगमार्गलसंछन्नांनिर्गुणद्वार
वाटिकाम्॥ १७ ॥ चतुर्वर्गफलोपेतांमहाकल्प
वनैर्वृताम्॥ सांद्रानंदसुधासिंधुनिगमद्वारवाटि
काम्॥ १८ ॥ ध्यानधारणयोगादितृणगुल्मल
तावृताम् ॥ सदसच्चित्स्वरूपाख्यमृगपाक्षिसमा
कुलाम् ॥ विद्याविद्याविचारत्वाल्लोकालोकाच
लावृताम्॥ १९ ॥ अविकारसमाश्लिष्टनिजध्या
नगुणावृताम् ॥ पंचीकरणपंचोत्थभूततत्त्वनिवे

दिताम् ॥ २० ॥ वेदोपनिषदर्थाख्यदेवर्षिगणसे
विताम् ॥ इतिहासग्रहगणैःसदारैरभिवंदिताम्
॥ २१ ॥ गाथाप्सरोभिर्यक्षैश्चगणाकिंनरसेविता
म् ॥ नारसिंहपुराणाख्यैःपुरुषैःकल्पचारणैः ॥
॥२२॥ कृतगानविनोदादिकथालापनतत्पराम्॥
तदित्यवाङ्मनोगम्यतेजोरूपधरांपराम् ॥२३॥
जगतःप्रसवित्रींतांसवितुःसृष्टिकारिणीं ॥ वरेण्य
मित्यन्नमयींपुरुषार्थफलप्रदाम् ॥ २४ ॥ अविद्या
वर्णवर्ज्यांचतेजोवद्गर्भसंज्ञिकाम् ॥ देवस्यसच्चि
दानंदपरब्रह्मरसात्मिकाम् ॥ २५ ॥ धीमह्यहंसवै

गा० तद्ब्रह्माद्वैतस्वरूपिणीम् ॥ धियोयोनस्तुसवि पं०
४६ ताप्रचोदयादुपासिताम् ॥ २६ ॥ परोसौसवितासा ६
क्षादेनोनिर्हरणायच ॥ परोरजसइत्यादिपरंब्रह्म
सनातनम् ॥ २७ ॥ आपोज्योतिरितिद्वाभ्यांपां
चभौतिकसंज्ञकम् ॥ रसोमृतंब्रह्मपदैस्तांनीत्यां
तापनींपराम् ॥ २८ ॥ भूर्भुवःसुवरित्येतैर्निगम
त्वप्रकाशिकाम् ॥ महर्जनस्तपःसत्यलोकोपरि
सुसंस्थिताम् ॥ २९ ॥ तादृगस्याविराड्रूपरह ४६
स्यंप्रवदाम्यहम् ॥ व्योमकेशालकाकाशद्योकि
रीटविराजिताम् ॥ ३० ॥ मेघभ्रुकुटिमाक्रांतवि

धिविष्णुशिवार्चिताम् ॥ गुरुभार्गवकर्णांतां सोम
सूर्याग्निलोचनाम् ॥ ३१ ॥ इलापिंगलसूक्ष्माभ्यां
वामनासापुटान्विताम् ॥ संध्याद्विरोष्ठपुटितां
लसद्वाग्भूपजिव्हिकां ॥ ३२ ॥ संध्यासौद्युमणेः
कंठलसद्वाहुसमन्विताम् ॥ पर्जन्यहृदयासक्त
वसुसुस्तनमंडलाम् ॥ ३३ ॥ आकाशोदरवित्रस्त
नाभ्यवांतरदेशिकाम् ॥ प्राजापत्याख्यजघनां
कटींद्राणीतिसंज्ञिकाम् ॥ ३४ ॥ ऊरूमलयमेरुभ्यां
शोभमानाऽसुरद्विषम् ॥ जानुर्नीजहृकुशिकवै
श्वदेवसदाभुजाम् ॥ ३५ ॥ अयनद्वयजंघाद्यखु

राद्यपितृसंज्ञिकाम् ॥ पदांघ्रिनखरोमाणिभूत
लक्ष्मलांछितां ॥३६॥ ग्रहराश्यृक्षदेवर्षिमूर्तिंचप
रसंज्ञिकां ॥ तिथिमासर्तुवर्षाख्यसुकेतुनिमिषा
त्मिकाम् ॥ ३७ ॥ अहोरात्रार्द्धमासाख्यांसू
र्यचंद्रमसात्मिकाम् ॥ मायाकल्पितवैचित्र्य
संध्याच्छादनसंवृताम् ॥ ३८ ॥ ज्वलत्कालान
लप्रख्यांतडित्कोटिसमप्रभाम् ॥ कोटिसूर्यप्र
तीकाशांचंद्रकोटिसुशीतलाम् ॥ ३९ ॥सुधामं
डलमध्यस्थांसांद्रानंदाऽमृतात्मिकाम् ॥ वाग
तीतांमनोरम्यांवरदांवेदमातरम् ॥ ४० ॥ चरा

चरमयींनित्यांब्रह्माक्षरसमन्विताम् ॥ ध्यात्वा
स्वात्मानिभेदेनब्रह्मपंजरमारभे ॥ ४१ ॥ पंजर
स्यऋषिश्चाहंछंदोविकृतिरुच्यते ॥ देवताचप
रोहंसःपरब्रह्माधिदेवता ॥ ४२ ॥प्रणवोबीजश
क्तिःस्यादोंकीलकमुदाहृतम् ॥ तत्तत्वं धीमहि
क्षेत्रंधियोस्त्रंयःपरंपदम् ॥ ४३ ॥ मंत्रमापोज्यो
तिरितियोनिर्हंसःसवेधकम् ॥ विनियोगस्तुसि
द्ध्यर्थंपुरुषार्थचतुष्टये ॥ ४४ ॥ ततस्तैरंगषट्कं
स्यात्तैरेवव्यापकत्रयम् ॥ पूर्वोक्तदेवतांध्यायेत्सा
कारगुणसंयुताम् ॥ ४५ ॥ पंचवक्त्रांदशभुजांत्रि

पंचनयनैर्युताम्॥मुक्ताविद्रुमसौवर्णासितशुभ्रस्मानननाम्॥ ४६ ॥ वाणींपरांरमांमायांचामरैर्दर्पणैर्युताम् ॥ षडंगदेवतामंत्रैरूपाद्यवयवात्मिकाम् ॥ ४७ ॥ मृगेंद्रवृषपक्षींद्रमृगहंसासनास्थिताम्॥ अर्द्धेन्दुबद्धमुकुटकिरीटमणिकुंडलाम् ॥ ॥ ४८ ॥ रत्नताटंकमांगल्यपरग्रैवेयनूपुराम् ॥ अंगुलीयककेयूरकंकणौघैरलंकृतां ॥४९॥ दिव्यस्रग्वस्त्रसंछन्नरविमंडलमध्यगां ॥ वराभयाब्जयुगुलांशंखचक्रगदांकुशान् ॥ ५० ॥ शुभ्रंकपालंदधतींवहंतीमक्षमालिकाम् ॥ गायत्रींवरदांदेवीं

सावित्रींवेदमातरम् ॥ ५१ ॥ आदित्यपथगामि
न्यास्मरेद्ब्रह्मस्वरूपिणीं ॥ विचित्रमंत्रजननीं
स्मरेद्विद्यांसरस्वतीं ॥ ५२ ॥ त्रिपदाऋङ्मयीपू
र्वामुखीब्रह्मास्त्रसंज्ञिका ॥ चतुर्विंशतितत्त्वाख्या
पातुप्राचींदिशंमम ॥ ५३ ॥ चतुष्पादयजुर्ब्रह्मदं
डाख्यापातुदक्षिणाम् ॥ षट्त्रिंशत्तत्वयुक्तासा
पातुमेदक्षिणांदिशं ॥ ५४ ॥ प्रत्यङ्मुखीपंचपदी
पंचाशत्तत्वरूपिणी ॥ पातुप्रतीचींमनिशंसामब्र
ह्मशिरोऽङ्किता ॥ ५५ ॥ सौम्याब्रह्मस्वरूपाख्यासा
थर्वांगिरसात्मिका ॥ उदीचींषट्पदापातुचतुःष

ष्टिकलात्मिका ॥५६॥ पंचाशत्तत्त्वरचिताभंवपा
दाशताक्षरी ॥ व्योमाख्यापातुमेचोर्ध्वांदिशंवे
दांगसंस्थिता ॥ ५७ ॥ विद्युन्निभाब्रह्मसंज्ञामृग
रूढाचतुर्भुजा ॥ चापेषुचर्मासिधरापातुमेपाव
कींदिशम् ॥ ५८ ॥ ब्राह्मीकुमारीगायत्रीरक्तांगी
हंसवाहिनी ॥ बिभ्रत्कमंडलवक्षस्त्रक्स्नुवान्मेपा
तुनैर्ऋतीं ॥ ५९ ॥ चतुर्भुजावेदमाताशुक्लांगीवृष
वाहिनी ॥ वराभयकपालाक्षस्राग्विणीपातुवारु
णीम् ॥ ६० ॥ श्यामासरस्वतीवृद्धावैष्णवीगरु

१ एकादशपदामित्यर्थः ।

डासना ॥ शंखाराब्जाभयकरापातुशैवींदिशं
मम ॥ ६१ ॥ चतुर्भुजावेदमातागौरांगीसिंहवाह
ना ॥ वराभयाब्जयुगुलैर्भुजैःपात्वधरांदिशम् ॥
॥ ६२ ॥ तत्तत्पार्श्वस्थितास्वस्ववाहनायुधभूष
णाः ॥ स्वस्वादिक्षुस्थिताःपांतुग्रहशक्त्यंगदेव
ताः ॥ ६३ ॥ मंत्राधिदेवतारूपामुद्राधिष्ठानदेव
ताः ॥ व्यापकत्वेनपात्वस्मानापदत्तलमस्तकी
॥ ६४ ॥ तत्पदंमेशिरः पातुभालंमेसवितुःपदम्॥
वरेण्यंमेदृशौपातुश्रुतींभर्गः सदामम ॥ ६५ ॥ घ्रा
णंदेवस्यमेपातुपातुधीमहिमेमुखम् ॥ जिह्वांम

गा० ६०

मधियःपातुकंठेमेपातुयःपदम् ॥६६॥ नः पदंपा
तुमेस्कंधौभुजौपातुप्रचोदयात् ॥ करौमेचपरः
पातुपादौमेरजसोऽवतु ॥ ६७॥ ओंमेनाभिंसदा
पातुकटिंमेपातुमेसदा ॥ ओमापःसक्थिनीपा
तुगुह्यंज्योतिःसदामम ॥ ६८॥ ऊरूममरसःपा
तुजानुनीअमृतंमम ॥जंघेब्रह्मपदंपातुगुल्फौभूः
पातुमेसदा ॥ ६९ ॥ पादौममभुवःपातुसुवःपात्व
खिलंवपुः ॥ रोमाणिमेमहःपातुरोमकंपातुमेज
नः ॥७० ॥ प्राणश्चधातुस्तत्वानितदीशःपातुमे
तपः ॥ सत्यंपातुममायूंषिहंसाद्दृद्धिंचपातुमे ॥

पं० ६

६०

॥ ७१ ॥ शुचिषत्पातुमेशुक्रंवसुपातुश्रियंमम ॥
मतिंपात्वंतरिक्षसद्धोतादानंचपातुमे ॥७२ ॥
वेदिषत्पातुमेविद्यामतिथिःपातुमेग्रहम् ॥ घर्मंदु
रोणसत्पातुनृषत्पातुसुतान्मम ॥७३॥ वरसत्पा
तुमेमायामृतसत्पातुमेसुतान् ॥ व्योमसत्पा
तुमेबंधून्भ्रातॄनब्जश्चपातुमे ॥ ७४ ॥ पशून्मे
पातुगोजाश्चऋतजाःपातुमेभुवम् ॥ सर्वंमेअद्रि
जापातुयानंमेपात्वृतंसदा ॥ ७५ ॥ अनुक्रमथय
त्स्थानंशरीरेंतर्बहिश्चयत् ॥ तत्सर्वंपातुमेनित्यं
हंसःसोहमहर्निशम् ॥ ७६ ॥ इदंतुकथितंसम्यङ्

मयाते ब्रह्मपंजरम् ॥ संध्ययोः प्रत्यहं भक्त्याज
पकालेविशेषतः ॥ ७७ ॥ धारयेद्द्विजवर्योयः श्रा
वयेद्वासमाहितः ॥ सविष्णुः सशिवः सोहंसोऽक्ष
रः सविराट्स्वराट् ॥ ७८ ॥ शताक्षरात्मकंदेव्या
नामाष्टाविंशतिः शतम् ॥ शृणुवक्ष्यामितत्सर्वम
तिगुह्यंसनातनम् ॥ ७९ ॥ भूतिदाभुवनावाणी
वसुधासुमनामही ॥ हरिणीजननीनंदासविसर्गा
तपस्विनी ॥ ८० ॥ पयस्विनीसतीत्यागाऐंदवी
सत्यवीरसा ॥ विश्वातुर्य्यापरारेच्यानिर्घृणीय
मिनीभवा ॥ ८१ ॥ गोवेद्याचजारिष्ठाचस्कंदिनी

धीर्मतिर्हिमा ॥ भीषणायोगिनीपक्षीनदीप्रज्ञाच
चोदिनी ॥ ८२ ॥ धनिनीयामिनीपद्मारोहिणी
रमणीऋषिः ॥ सेनामुखीसामधीचबकुलादोष
वर्जिता ॥ ८३ ॥ सर्वकामदुघासोमोद्भवाहंकारव
र्जिता ॥ द्विपदाचचतुष्पादात्रिपदाचैकषट्पदा ॥
॥ ८४ ॥ अष्टापदीनवपदीसासहस्राक्षरात्मिका ॥
इदंयःपरमंगुह्यंसावित्रीमंत्रपंजरम् ॥ ८५ ॥ ना
माष्टविंशतिशतंशृणुयात्श्रावयेत्पठेत् ॥ मर्त्या
नाममृतत्वायभीतानामभयायच ॥ ८६ ॥ मोक्षा
यचमुमुक्षूणांश्रीकामानांश्रियेसदा ॥ विजयाय

गा० पं०
६२ ६

युयुत्सूनांव्याधितानामरोगकृत् ॥ ८७ ॥ वश्यां
यवश्यकामानांविद्यार्थैवेदकामिनाम् ॥ द्रविणा
यदरिद्राणांपापिनांपापशांतये ॥ ८८ ॥ वादि
नांवादविजयेकवीनांकविताप्रदम् ॥ अन्नायक्षु
धितानांचस्वर्गायनाकमिच्छताम् ॥ ८९ ॥ पशु
भ्यःपशुकामानांपुत्रेभ्यःपुत्रकांक्षिणाम् ॥ क्लेशि
नांशोकशांत्यर्थंनृणांशत्रुभयायच ॥ ९० ॥ राज
वश्यायद्रष्टव्यंपंजरंनृपसेविनाम् ॥ भक्त्यर्थंवि
ष्णुभक्तानांविष्णौसर्वांतरात्मनि ॥ ९१ ॥ नायकं
विधिसृष्टानांशांतयेभवतिध्रुवम् ॥ निस्पृहाणांनृ

६२

णांमुक्तिःशाश्वतीभवतिध्रुवम् ॥९२॥ जप्यंत्रिवर्ग
संयुक्तंगृहस्थेनविशेषतः ॥ मुनीनांज्ञानसिद्ध्यर्थं
यतीनांमोक्षसिद्ध्ये ॥९३॥ उद्यतंचंद्रकिरणमुप
स्थायकृतांजलिः ॥ कालेनेवास्वभवनेतिष्ठन्हु
त्वाजपेदिदम् ॥९४॥ सर्वान्कामानवाप्नोतितथै
वशिवसंनिधौ ॥ ममप्रीतिकरंदिव्यंविष्णुभक्ति
विवर्द्धनम् ॥९५॥ ज्वरार्तानांकुशाग्रेणमार्जये
त्कुष्ठरोगिणाम् ॥ अंगमंगंयथालिंगंकवचेनतु
साधकः ॥९६॥ मंडलेनविशुद्ध्येतसर्वरोगैर्नसं
शयः ॥ मृतप्रजाचयानारीजन्मवंध्यातथैवच ॥

॥ ९७ ॥ कन्यादिवंध्यायानारीतासामंगंप्रमा
र्जयेत् ॥ पुत्रानरोगिणस्तास्तुलभंतेदीर्घजीवि
नः ॥ ९८ ॥ तास्ताःसंवत्सरादर्वाग्गर्भन्तुदधिरे
पुनः ॥ पतिविद्वेषिणीयास्त्रीअंगंतस्याःप्रमार्ज
येत् ॥ ९९ ॥ तमेवभजतेसास्त्रीपतिंकामवशं
नयेत् ॥ अश्वत्थेराजवश्यार्थंबिल्वमूलेस्वरू-
पभाक् ॥ १०० ॥ पालाशमूलेविद्यार्थीतेजसा
भिमुखोरवौ ॥ कन्यार्थीचंडिकागेहेजपेच्छत्रु
भयायच ॥ १०१ ॥ श्रीकामोविष्णुगेहेचउद्या
नेश्रीवशीभवेत् ॥ आरोग्यार्थेस्वगेहेचमोक्षार्थी

शैलमस्तके ॥ १०२ ॥ सर्वकामोविष्णुगेहेमोक्षा
र्थीयत्रकुत्रचित् ॥ जपारंभेतुहृदयंजपांतेकवचं
पठेत् ॥ १०३ ॥ किमत्रबहुनोक्तेनशृणुनारदत
त्वतः ॥ यंयंचिंतयतेनित्यंतंतंप्राप्नोतिनिश्चितम्
॥ १०४ ॥ इतिश्रीमद्वासिष्ठसंहितायांब्रह्मनारद
संवादेश्रीमद्गायत्रीपंजरस्तोत्रंसमाप्तम् ॥ ६ ॥

॥ अथगायत्रीस्तवराजः ॥

ॐ अस्यश्रीगायत्रीस्तवराजस्तोत्रमंत्रस्यवि
श्वामित्रऋषिःसकलजननीचतुष्पदागायत्रीपर
मात्मादेवतासर्वोत्कृष्टपरंधामप्रथमपादो बीजं

द्वितीयःशक्तिः तृतीयःकीलकंदशप्रणवसंयुक्ता
सव्याहृतिकातूर्यपादसहिता॰व्यापकंममधर्मार्थ
काममोक्षार्थेजपेविनियोगः॥ न्यासंकृत्वाध्याये
त्॥ तद्यथा॥ गायत्रींवेदधात्रींशतमखफलदांवेद
शास्त्रैकवेद्यां चिच्छक्तिंब्रह्मविद्यांपरमशिवपदां
श्रीपदंवैकरोति॥ सर्वोत्कृष्टंपदंतत्सवितुरनुपदां
तेवरेण्यंशरण्यं भर्गोदेवस्यधीमह्यभिदधातिधि
योयोनःप्रचोदयादित्यावितेजः॥१॥साम्राज्यबी
जंप्रणवत्रिपादंसव्यापसव्यंप्रजपेत्सहस्रकम्॥
संपूर्णकामंप्रणवंविभूतिं तथाभवेद्वाक्यविचित्र

वाणी॥२॥शुभंशिवंशोभनमस्तुमह्यंसौभाग्यभो
गोत्सवमस्तुनित्यं ॥ प्रकाशविद्यात्रयशास्त्रसर्वं
भजेन्महामंत्रफलंप्रियेवै॥३॥ ब्रह्मास्त्रंब्रह्मदंडांशि
रसिशिखिमहद्ब्रह्मशीर्षंनमोंतं सूक्तंपारायणोक्तं
प्रणवमथमहावाक्यसिद्धांतमूलं॥तूर्य्यंत्रीणिद्वि
तीयंप्रथममनुमहावेदवेदांतसूक्तंनित्यंस्मृत्यानु
सारंनियमितचरितंमूलमंत्रंनमोंतं ॥ ४॥ अस्त्रंश
स्त्रहतंअघोरसहितंदंडेनवाजीहतंआदित्यादिह
तंशिरोंतसहितं पापक्षयार्थंपरं ॥ तुर्य्यांत्यादिवि
लोममंत्रपठनं बीजंशिखांतोर्ध्वकम् नित्यंकाल

गा० ५५ स्त० ७

नियम्यविप्रविदुषांकिंदुष्कृतंभूसुरान् ॥ ५ ॥
नित्यंमुक्तिप्रदं नियम्यपवनं निर्घोषशक्तित्रयं
सम्यग्ज्ञानगुरूपदेशविधिवद्देवींशिखांतामपि ॥
षष्ट्यैकोत्तरसंख्ययानुगतसौषुम्नादिमार्गत्रयीं
ध्यायेन्नित्यसमस्तवेदजननीं देवींत्रिसंध्यामयी
म् ॥ ६ ॥ गायत्रींसकलागमार्थविदुषांसौरस्यबीजे
श्वरींसर्वाम्नायसमस्तमंत्रजननीं सर्वज्ञधामेश्व
रीम् ॥ ब्रह्मादित्रयसंपुटार्थकरणींसंसारपाराय
णींसंध्यां सर्वसमानतंत्रपरयाब्रह्मानुसंधायिनी
म् ॥ ७ ॥ एकद्वित्रिचतुःसमानगणनावर्णाष्टकंपाद

योऽपादादाप्रणवादिमंत्रपठनेमंत्रत्रयीसंपुटाम्॥
संध्यायांद्विपदंपठेत्परतरंसायंतुरीयंयुतंनित्या
नित्यमनंतकोटिफलदंप्राप्तंनमस्कुर्महे ॥८॥ ओ
जोसीतिसहोस्यहोबलमासिभ्राजोसितेजस्विनी
वर्चस्वीसवितार्ग्निसोममममृतंरूपंपरंधीमहि ॥ दे
वानांद्विजवर्यतांमुनिगणेमुक्त्यर्थिनां शांतिनां
ओमित्येकमृचंपठंतियमिनोयंयंस्मरेत्प्राप्नुया
त् ॥ ९ ॥ ओमित्येकमजस्वरूपममलंतत्स
प्तधाभादितंतारंतंत्रसमन्वितं परतरेपादत्रयंग
र्भितम् ॥आपोज्योतिरसोमृतंजनमहःसत्यंतपः

स्वर्भुवर्भूयोभूयनमामिभूर्भुवस्वरोमेतैर्महामंत्र
कम् ॥ १० ॥ आदौबिंदुमनुस्मरन्परतरेबालात्रि
वर्णोच्चरन्व्याहृत्यादिसबिंदुयुक्तत्रिपदातारत्रयं
तुर्यकम् ॥ आरोहादवरोहतःक्रमगताश्रीकुंड
लीत्थंस्थिता देवीमानसपंकजेत्रिनयनापंचान
नापातुमाम् ॥ ११ ॥ सर्वेसर्ववशेसमरनसमयेस
त्यात्मिकेसात्विकेसावित्रीसवितात्मकेशशियु
तेसांख्यायनीगोत्रजे॥संध्यात्रीण्युपकल्प्यसंग्र
हविधिःसंध्याभिधानामकेगायत्रीप्रणवादिमंत्र
गुरुणासंप्राप्यतस्मैनमः ॥ १२ ॥ क्षेमंदिव्यमनो

रथाः परतरेचेतःसमाधीयतांज्ञानं नित्यवरेण्यमे
तदमलंदेवस्यभर्गोधियम् ॥ मोक्षश्रीर्विजयार्थि
नोऽथसवितुःश्रेष्ठांविधेस्तत्पदंप्रज्ञामेधप्रचोदया
त्प्रतिदिनंयोनःपदंपातुमों ॥ १३ ॥ सत्यंतत्स
वितुर्वरेण्यविरलं विश्वादिमायात्मकंसर्वाद्यंप्रति
पादपादरमयातारंतथामन्मथम् ॥ तुर्य्यान्यत्रि
तयंद्वितीयमपरंसंयोगसव्याहृतिं सर्वाम्नायम
नोन्मनींमनसिजांध्यायामिदेवींपराम् ॥ १४ ॥
आदौगायत्रिमंत्रं गुरुकृतनियमंधर्मकर्मानुकूलं
सर्वाद्यंसारभूतं सकलमनुमयंदेवतानामगम्यम्

॥ देवानांपूर्वदेवंद्विजकुलमुनिभिः सिद्धविद्याधराद्यैः कोवावक्तुंसमर्थस्तवमनुमहिमाबीजराजादिमूलम् ॥ १५ ॥ गायत्रींत्रिपदांत्रिबीजसहितां त्रिव्याहृतिंत्रैपदां त्रिब्रह्मात्रिगुणांत्रिकालनियमां वेदत्रयींतांपरां॥ सांख्यादित्रयरूपिणींत्रिनयनां मातृत्रयीं तत्परां त्रैलोक्यत्रिदशत्रिकोटिसहितांसंध्यांत्रयींतांनुमः॥ १६॥ ओमित्येतत्त्रिमात्रा त्रिभुवनकरणं त्रिस्वरंवह्निरूपंत्रीणित्रीणि त्रिपादंत्रिगुणगुणमयंत्रैपुरांतंत्रिसूक्तम् ॥ तत्त्वानांपूर्वशक्तिंद्वितियगुरुपदंपीठयंत्रात्मकंतंतस्मादेतत्त्रि

पादंत्रिपदमनुसरंत्राहिमांभोनमस्ते ॥ १७ ॥ स्व
स्तिश्रद्धातिमेधामधुमतिमधुरः संशयः प्रज्ञकां
तिर्विद्याबुद्धिर्बलंश्रीरतनधनपतिःसौम्यवाक्या
नुवृत्तिः ॥ मेधाप्रज्ञाप्रतिष्ठामृदुपतिमधुरापूर्णवि
द्याप्रपूर्ण प्राप्तंप्रत्यूषचिंत्यंप्रणवपरवशात्प्राणि
नांनित्यकर्म ॥ १८ ॥ पंचाशद्वर्णमध्येप्रणवपर
युते मंत्रमाद्यं नमोंतं सर्वसव्यापसव्यंशतगुणम
भितोवर्णमष्टोत्तरंते ॥ एवंनित्यंप्रजप्तंत्रिभुवन
सहितंतूर्य्यमंत्रंत्रिपादं ज्ञानंविज्ञानगम्यंगगनसु
सदृशंध्यायतेयःसमुक्तः॥१९॥आदिक्षांतसबिंदु

युक्तसहितंमेरुंक्षकारात्मकंव्यस्ताव्यस्तसमस्त वर्गसहितंपूर्णंशताष्टोत्तरम् ॥ गायत्रींजपतांत्रिकालसहितांनित्यंसनैमित्तिकंएवंजाप्यफलंशिवेनकथितंसद्भोग्यमोक्षप्रदम् ॥ २० ॥ सप्तव्याहृतिसप्ततारविकृतिःसत्यंवरेण्यंधृतिः सर्वंतत्सवितुश्चधीमहिमहाभर्गस्यदेवंभजे ॥ धाम्नोधामधमाधिधारणमहान्धीमत्पदंध्यायते ॐतत्सर्वमनुप्रपूर्णंदशकंपादत्रयंकेवलम् ॥२१॥विज्ञानंविलसद्विवेकवचसःप्रज्ञानुसंधारिणीं श्रद्धामेध्ययशःशिरःसुमनसःस्वास्तिश्रियत्वांसदा ॥ आयुष्यं

धनधान्यलक्ष्मिमतुलांदेवींकटाक्षंपरंतत्कालेस
कलार्थसाधनमहान्मुक्तिर्महत्त्वंपदम् ॥ २२ ॥
पृथ्वीगंधोर्चनायां नभसिकुसुमतावायुधूपप्रक
र्षौ वन्हिर्दीपप्रकाशो जलममृतमयंनित्यसंक
ल्पपूजा ॥ एतत्सर्वंनिवेद्यंसुखवसतिहृदिसर्व
दादंपतीनां त्वंसर्वज्ञाशिवंकुरुष्वममतानाहंत्वया
ज्ञेयसि ॥ २३ ॥ सौम्यंसौभाग्यहेतुंसकलसु
खकरंसर्वसौख्यंसमस्तं सत्यंसद्भोगनित्यंसुख
जनसुहृदंसुंदरं श्रीसमस्तम्॥सौमंगल्यंसमग्रंस
कलशुभकरंस्वास्तिवाचंसमस्तं सर्वाद्यंसद्विवेकं

त्रिपदपदयुगंप्राप्तुमध्यासमस्तम् ॥ २४ ॥ गाय
त्रीपदपंचपंचप्रणवद्वंद्वंत्रिधासंपुटंसृष्ट्यादिक्रम
मंत्रजाप्यदशकंदेवीपदंक्षुत्रयम् ॥ मंत्रादिस्थि
तकेषुसंपुटमिदं श्रीमातृकावेष्टनं वर्णात्यादिवि
लोममंत्रजपनंसंहारसंमोहनम् ॥ २५ ॥ भूरा
द्यंभूर्भुवस्वस्त्रिपदपदयुतंत्र्यक्षमाद्यंतयोज्यं सृष्टि
स्थित्यंतकार्य्यंक्रमाच्छिखिसकलंसर्वमंत्रं प्रशस्त
म् ॥ सर्वांगंमातृकाणांमनुमयवपुषंमंत्रयोगंप्र
युक्तंसंहारंक्षादिवर्णंवसुशतगणनं मंत्रराजं नमा
मि ॥ २६ ॥ वैश्वामित्रमुदाहृतंहितकरंसर्वार्थसि

द्धिप्रदंस्तोत्राणांपरमं प्रभातसमयेपारायणं नि
त्यशः ॥ वेदानांविधिवादमंत्रसकलंसिद्धिप्रदंसं
पदांसंप्राप्नोत्यपरत्रसर्वसुखदं आयुष्यमारोग्य
ताम् ॥ २७ ॥ इति विश्वामित्रकृतोगायत्रीस्तव
राजःसमाप्तः ॥ ॥ ॥ ॥ ॥

॥ अथसहस्रनाम ॥

ॐ कैलासेसुखमासीनंतुषारकरशेखरम् ॥ बद्धां
जलिर्नमस्कृत्याभ्यर्च्यपृच्छतिपार्वती॥ १ ॥पार्व
त्युवाच ॥ किंविन्यस्तंत्वयादेवस्वशरीरेनिरंतर
म्॥कथमेतादृशीकांतिःकथंतेष्टौसमृद्धयः ॥२॥

त्रिपदपदयुगंप्राहुमध्यासमस्तम् ॥ २४ ॥ गाय
त्रीपदपंचपंचप्रणवद्वंद्वंत्रिधासंपुटंसृष्ट्यादिक्रम
मंत्रजाप्यदशकंदेवीपदंक्षुत्रयम् ॥ मंत्रादिस्थि
तकेषुसंपुटमिदं श्रीमातृकावेष्टनं वर्णात्यादिवि
लोममंत्रजपनंसंहारसंमोहनम् ॥ २५ ॥ भूरा
द्यंभूर्भुवस्वस्त्रिपदपदयुतंत्र्यक्षमाद्यंतयोज्यं सृष्टि
स्थित्यंतकार्य्यंक्रमाशिखिसकलंसर्वमंत्रं प्रशस्त
म् ॥ सर्वांगंमातृकाणांमनुमयवपुषंमंत्रयोगंप्र
युक्तंसंहारंक्षादिवर्णंवसुशतगणनं मंत्रराजं नमा
मि ॥ २६ ॥ वैश्वामित्रमुदाहृतंहितकरंसर्वार्थसि

द्धिप्रदंस्तोत्राणांपरमं प्रभातसमयेपारायणं नि
त्यशः ॥ वेदानांविधिवादमंत्रसकलंसिद्धिप्रदंसं
पदांसंप्राप्नोत्यपरत्रसर्वसुखदं आयुष्यमारोग्य
ताम् ॥ २७ ॥ इति विश्वामित्रकृतोगायत्रीस्तव
राजःसमाप्तः ॥ ॥ ॥ ॥ ॥

॥ अथसहस्रनाम ॥

ॐ कैलासेसुखमासीनंतुषारकरशेखरम् ॥ बद्धां
जलिर्नमस्कृत्याभ्यर्च्यपृच्छतिपार्वती॥१॥पार्व
त्युवाच ॥ किंविन्यस्तंत्वयादेवस्वशरीरेनिरंतर
म् ॥कथमेतादृशीकांतिःकथंतेष्टौसमृद्धयः ॥२॥

सर्वतत्त्वप्रभुत्वंचकथंकथमथाश्रयेत् ॥ कृपया
ब्रूहिदेवेशप्रसन्नोसियदिप्रभो ॥ ३ ॥ भगवान्वि
विधाविद्याःश्रोतुमिच्छामितेप्रभो॥इदानींश्रोतु
मिच्छामिगायत्र्याश्चमहोत्सवम् ॥ ४ ॥ नाम्नां
सहस्रंदेवेशकृपयावक्तुमर्हसि ॥ यद्यहंप्रेयसीभा
र्य्यायद्यहंप्राणवल्लभा ॥ ५ ॥ इतिश्रुत्वावचोदे
व्याःप्रसन्नःप्रभुरीश्वरः ॥ श्रूयतामितिचाभाष्य
जगादजगदंबिकाम् ॥ ६ ॥ शृणुदेविरहस्यंमेक
स्याप्यग्रेनचोदितम् ॥ गोपितंसर्वतंत्रेषुसिद्धानां
स्तोत्रमुत्तमम् ॥ ७॥ सर्वसौभाग्यजनकंसर्वसंप

त्तिदायकम्॥सर्ववश्यकरंलोकेसर्वप्रत्यूहनाशन
म् ॥ ८॥ सर्ववादिमुखस्तंभिनिग्रहानुग्रहक्षमम्
॥ त्वत्प्रीत्याकथयिष्यामिसुगोप्यमपिदुर्लभम्
॥ ९ ॥ सर्वपापक्षयकरंसर्वज्ञानमयंशिवम् ॥
परायणानांपरमापरब्रह्मस्वरूपिणी ॥ १० ॥ परा
चपरमेशानिपरब्रह्मात्मिकामता ॥ सादेवीचव
रारोहाचेतसाचिंतयाम्यहम् ॥ ११ ॥ ऐश्वर्यंच
दशप्राप्तिर्वरदादित्वमेवच ॥ गायत्र्यादिव्य
साहस्रंस्वप्नेचाहंमयापियत् ॥ १२॥ ऋषिरस्यस
माख्यातोमहादेवोमहेश्वरः ॥ देवतादेवजननी

छंदःसामादिकीर्तितम् ॥ १३ ॥ धर्मार्थकाममो
क्षार्थेविनियोगउदाहृतः ॥ सर्वभूतांतरीध्या
त्वापद्मासनगतांशुचिः ॥ १४ ॥ ततःसहस्रनामे
दंपठितव्यंमुमुक्षुभिः ॥ सर्वकार्यकरंपुण्यंमहा
पातकनाशकम् ॥ १५ ॥ ॐ तत्काररूपातद्रू
पातत्पदार्थस्वरूपिणी॥ तपःस्वाध्यायनिरतात
पस्वीवाग्विदांवरा ॥ १ ॥ तत्कीर्तिगुणसंपन्ना
तथ्यवादीतपोनिधिः ॥ तत्पदेशानुसंबंधातपो
लोकनिवासिनी ॥ २ ॥ तरुणादित्यसंकाशा
तप्तकांचनभूषणा ॥ तमोपहारिणीतंत्रीतान्निपा

तनिवारिणी ॥ ३ ॥ तलादिभुवनांतःस्थाता
रिणीतारस्वरूपिणी ॥ तर्करूपतकाषादितर्कशा
स्त्रविदारिणी ॥ ४ ॥ तर्कवादिमुखास्तंभाराज्ञां
चपरिपालिनी ॥ तंत्रसारातंत्रमातातंत्रमार्गप्रद
र्शिनी ॥ ५ ॥ तंत्रविज्ञविधानज्ञातंत्रस्थातंत्रसा
क्षिणी ॥ तदेकध्याननिरतातत्त्वज्ञानप्रबोधिनी
॥ ६ ॥ तन्नाममंत्रसुप्रीतातपस्विजनसेविता ॥
ॐकाररूपासावित्रीसर्वरूपासनातना ॥ ७ ॥
संसारदुःखशमनीसर्वयागफलप्रदा ॥ ८ ॥ स
फलासत्यसंकल्पासत्यासत्यप्रदायिनी ॥ संतो

गा०
६२

षजननीसारासत्यलोकनिवासिनी ॥ ९ ॥ समु
द्रतनयाराध्यासामगानप्रियासती ॥ समाना
सामिधेनीचसमस्तसुरसेविता ॥ १० ॥ सर्वसं
पत्तिजननीसंप्रदासिंधुसेविता ॥ सर्वोत्तुंगातुंग
हीनासद्गुणासकलेष्टदा ॥ ११ ॥ सनकादिमुनि
ध्येयासमानाधिकवर्जिता ॥ साध्यासिद्धासुधा
वासासिद्धिःसाध्यप्रदायिनी ॥ १२ ॥ सम्यगा
राध्यनिलयासमुत्तीर्णासदाशिवा ॥ सर्ववेदांत
निलयासर्वशास्त्रार्थवादिनी ॥ १३ ॥ सहस्रदल
पद्मस्थासर्वज्ञासर्वतोमुखी ॥ समयासमयाचा

स०
८

६२

रासत्याषड्ग्रंथिभेदिनी ॥ १४ ॥ सप्तकोटिमहा
मंत्रमातासर्वप्रदायिनी ॥ सगुणासंभ्रमासाक्षी
सर्वचैतन्यरूपिणी ॥ १५ ॥ सत्कीर्तिःसात्विकी
साध्वीसच्चिदानंदरूपिणी ॥ संकल्परूपिणीसं
ध्याशालाग्रामनिवासिनी ॥ १६ ॥ सर्वोपाधि
विनिर्मुक्तासत्यज्ञानप्रबोधिनी ॥ विकाररूपा
विप्रश्रीर्विप्राराधनतत्परा ॥ १७ ॥ विप्रिणी
विप्रकल्याणीविप्रवाक्यस्वरूपिणी ॥ विप्रकैव
ल्यशयनीविप्रीविप्रप्रसादिनी ॥ १८ ॥ विप्रमं
दिरमध्यस्थाविप्रवादविनोदिनी ॥ विप्रोपाधिवि

गा०
६३

निर्मुक्ताविप्रहत्याविमोचनी ॥१९॥ विप्रत्राताविप्रगोत्राविप्रगोत्रविवर्धिनी ॥ विप्रभोजनसंतुष्टाविष्णुरूपाविनोदिनी ॥ २० ॥ विष्णुमायाविष्णुवंद्याविष्णुगर्भाविचित्रिणी॥वैष्णवीविष्णुभगिनीविष्णुमायाविलासिनी ॥ २१ ॥ विकाररहितावंद्याविज्ञानघनरूपिणी ॥ विश्वसाक्षीविश्वयोनिर्विश्वामित्रप्रसादिनी ॥२२॥ विबुधाविष्णुसंकल्पाविकल्पाविश्वसाक्षिणी ॥ विष्णुचैतन्यानिलयाविष्णुस्थाविश्ववादिनी ॥ २३ ॥ विवेकीविविधानंदीविजयाविश्वमोहिनी ॥ विद्याधरीवि

स०
८
६३

धानज्ञाविबुधार्थस्वरूपिणी ॥ २४ ॥ विरूपाक्षी
विराड्रूपाविक्रमाविश्वमंगला ॥ विश्वंभरास
माराध्याविश्वभ्रमणकारिणी ॥ २५ ॥ विनाय
कीविनोदस्थावीरगोष्ठीविवर्द्धिनी ॥ विवाहराहि
तावंद्याविंध्याचलनिवासिनी ॥२६॥ विद्याविद्या
करीवेद्यावैद्यविद्याप्रबोधिनी ॥ विमलाविभवावि
द्याकिंकस्थाकिंकसाक्षिणी ॥ २७ ॥ वीरमध्या
वरारोहावितंत्राविश्वनायका ॥ वीरहत्याप्रश
मनीविनम्रजनपावनी ॥ २८ ॥ वीरधाविविधा
काराविरोधजनवादिनी ॥ तुकारूपातुतुर्यश्रीस्तु

लसीवनवासिनी ॥ २९ ॥ तुलस्यामातुला
तुल्यातुल्यगोत्रीतुलेश्वरी ॥ तुरंगीतुरगारूढातु
रंगरयमोदिनी ॥ ३० ॥ तुरंगरदनामोहातुलादा
नफलप्रदा ॥ तुलामाघस्नानतुष्टातुष्टिपुष्टिप्रदा
यिनी ॥ ३१ ॥ तुरंगमप्रसंतुष्टातुलितातुल्यम
ध्यगा ॥ तुंगोत्तुंगातुंगकुचातुहिनाचलसंस्थि
ता ॥ ३२ ॥ तुंबुरादिस्तुतिप्रीतातुषारवपुषेश्व
री ॥ तुष्टाचतुष्टजननीतुष्टलोकनिवासिनी ॥
॥ ३३ ॥ तुलाधारातुलामध्यातुलस्थातुलरूपि
णी ॥ तुरीयगुणगंभीरातुर्यनामस्वरूपिणी ॥

॥ ३४ ॥ तुर्य्यविद्वल्लास्यसंस्थातुर्य्यशास्त्रार्थवा
दिनी ॥ तुर्य्यशास्त्रार्थतत्वज्ञातुर्य्यवादविनोदि
नी ॥ ३५ ॥ तुर्य्यनादातनिलयातुर्य्यानंदस्वरू
पिणी ॥ तुरीयभक्तिजननीतुर्य्यमार्गप्रदर्शिनी
॥ ३६ ॥ वकाररूपावागेशीवरेण्यावरसंस्थिता
॥ वरावरिष्ठावैदेहीवैद्यशास्त्रप्रदर्शिनी ॥ ३७ ॥
वैकल्पश्रमणीवाणीवांछितार्थफलप्रदा ॥ वय
स्थावयमध्यस्थावयोवस्थाविवर्जिता ॥ ३८ ॥ वं
दिनीवादिनीवार्य्यावाङ्मयीवीरवंदिनी ॥ वानप्र
स्थाश्रमस्थायीवनदुर्गावनालया ॥ ३९ ॥ वन

जाक्षीवनचरीवनितावनमोदिनी ॥ वसिष्ठावाम
देवादिवंद्यावंद्यस्वरूपिणी ॥ ४० ॥ वाल्मीकिवा
क्करीवाचावारुणीवरुणप्रिया ॥ वैद्यावैद्यचिकि
त्साचवषट्कारीवसुंधरा ॥ ४१ ॥ वसुमातावसु
त्रातावसुजन्मविमोचनी॥ वसुप्रदावासुदेवीवासु
देवमनोहरी ॥ ४२ ॥ वासवार्चितपादश्रीर्वासवा
रिविनाशिनी ॥ वागीशवाङ्मनःस्थायी वनवा
सवशावशी ॥ ४३ ॥ वामदेवीवरारोहावाद्यघोष
णतत्परा ॥ वाचस्पतिसमाराध्यावागीशीवाच
कीरवाक् ॥ ४४ ॥ रेकाररूपारेवाचरेवातीरनि

वासिनी ॥ रेकिणीरेवतीरक्षारुद्रजन्मारजस्वला
॥ ४५ ॥ रेणुकारमणीरम्यारतिवृद्धारतारती ॥
रावणादित्यदानंदाराजश्रीराजशेखरा ॥ ४६ ॥
रणमध्यारथारूढारविकोटिसमप्रभा ॥ रविमंड
लमध्यस्थारजनीरविलोचना ॥ ४७ ॥ रथांगपा
णिरिक्षोघ्नीरागिणीरावणार्चिता ॥ रंभादिकन्य
कराध्याराज्यदाराज्यवर्द्धिनी ॥ ४८ ॥ रजता
द्रीशऊरुस्थारम्याराजीवलोचना ॥ रमावाणीर
माराध्याराज्यदात्रीरथोत्सवा ॥ ४९ ॥ रेतोवती
रथोत्साहाराजहृद्रोगहारिणी ॥ रंगप्रवृद्धमधुरा

गा०
६६

स०
८

रंगमंडपमध्यगा ॥५०॥ रंजिताराजजननीरमा
रेवारतीरणा ॥ राविणीरागिणीराज्याराजराजे
श्वरार्चिता ॥५१ ॥ राजन्वतीराजनीतिस्तथार
जतवासिनी ॥ राघवार्चितपादश्रीराघवाराघव
प्रिया ॥५२ ॥ रत्नसागरमध्यस्थारत्नद्वीपनिवा
सिनी ॥ रत्नप्राकारमध्यस्थारत्नमंडपमध्यगा
॥ ५३ ॥ रत्नाभिषेकसंतुष्टारत्नांगीरत्नदायि
नी ॥ निकाररूपिणीनित्यानित्यतृप्तानिरंजना ॥
॥५४॥ निद्रात्ययविशेषज्ञानीलजीमूतसन्निभा ॥
नीवारशुकवत्तन्वीनित्यकल्याणरूपिणी ॥५५॥

नित्योत्सवानित्यनित्यानित्यानंदस्वरूपिणी।

॥ निर्विकल्पानिर्गुणस्थानिश्चिंतानिरुपद्रवा ॥

॥ ५६ ॥ निःसंशयासंशयघ्नीनिर्लोभालोभनाशि

नी ॥ निर्भवाभवपाशघ्नीनीतिशास्त्रविचारिणी ॥

॥ ५७ ॥ निखिलागममध्यस्थानिखिलागमसं

स्थिता ॥ नित्योपाधिविनिर्मुक्तानित्यकर्मफल

प्रदा ॥ ५८ ॥ नीलग्रीवानिरीहाचनिरंजनवरप्र

दा॥नवनीतप्रियानारीनरकार्णवतारिणी ॥५९॥

नारायणीनिराहारानिर्मलानिर्गुणाप्रिया ॥ निर्म

लानिर्गमाचारानिखिलागमवेदिनी॥६०॥ निमि

गा० षानिमेषोत्पन्नानिमेषांडविधायिनी॥ निवातदी स०
६७ पमध्यस्थानिश्चिताचिंतनाशिनी ॥६१॥ नीलवे ८
णीनीलखंडानिर्विषाविषनाशिनी॥ नीलांशुकप
रीधानानिंदितानिर्निरीश्वरी ॥ ६२ ॥ निश्वासा
श्वासमध्यस्थामिथोयानानिवासिनी ॥ यंकाररू
पायंत्रेशीयंत्रयंत्रायशस्विनी ॥ ६३ ॥ यंत्राराध
नसंतुष्टायजमानस्वरूपिणी ॥ यशस्विनीयका
रस्थायूपस्तंभनिवासिनी ॥ ६४ ॥ यमघ्नीयमक ६७
ल्पाचयशःकामायतीश्वरी ॥ यमादियोगनिर
तायतिनिर्दीपहारिणी ॥ ६५ ॥ यातायज्ञायाज्ञ

याचयज्ञेश्वरपातिव्रता ॥ यज्ञयज्ञायजुर्यज्वाय
ज्ञीनिकरकारिणी ॥६६॥ यज्ञसूत्रप्रदाज्येष्ठायज्ञ
कर्मफलप्रदा ॥ यवांकुराप्रियायामायवनीयवना
धिपा ॥६७॥ यज्ञकर्त्रींयज्ञभोक्त्रीयज्ञांगीयज्ञवा
हिनी ॥ यज्ञसाक्षीयज्ञमुखीयजुषीयज्ञरक्षकी ॥
॥६८॥भकाररूपाभद्रेशीभद्रकल्याणदायिनी ॥
भक्तप्रियाभक्तसखीभक्ताभीष्टस्वरूपिणी॥६९॥
भक्तिनीभक्तिसुलभाभक्तिदाभक्तवत्सला ॥ भ
क्तचैतन्यनिलयाभक्तबंधविमोचनी ॥ ७० ॥ भ
क्तस्वरूपिणीभग्यीभाग्यारोग्यप्रदायिनी ॥ भ

क्तमाताभक्तगम्याभक्ताभीष्टप्रदायिनी ॥ ७१ ॥
भास्वरीभैरवीभोगीभवानीभयनाशिनी ॥ भद्रा
त्मिकाभद्रदायीभद्रकालीभयंकरी ॥ ७२ ॥ भ
गनिष्यंदिनीभाग्याभवबंधविमोचिनी ॥ भीमा
भीमननभाभंगीभंगुराभीमदर्शिनी ॥ ७३ ॥ भ
ल्लीभल्लीधराभेरुभैरुंडाभीमपापहा ॥ भावज्ञाभो
ग्यदात्रीचभवघ्नीभूतिभूषणा ॥ ७४ ॥ भूतिदाभू
मिदात्रीचभूपतित्वप्रदायिनी ॥ भ्रामरीभ्रमरी
भारीभवसंसारतारिणी ॥ ७५ ॥ भंडासुरवधो
त्साहाभांडवाभाविनोदिनी ॥ गोकाररूपागो

मातागुरुपत्नीगुरुर्गिरा ॥ ७६ ॥ गोरोचनप्रियागौ
रीगोविंदगुणवर्द्धिनी ॥ गोपालचेष्टासंतुष्टागोवर्द्ध
नविवर्द्धिनी ॥ ७७॥ गोविंदरूपिणीगोप्तागोप्तागो
त्रविवर्द्धिनी ॥ गीतागीतप्रियागेयागोकागोकुल
वर्द्धिनी ॥ ७८ ॥ गोपीगोहत्यशमनीगुणाचगुण
विग्रहा ॥ गोविंदजननीगोष्ठागोपदागोकुलोत्स
वा ॥ ७९ ॥ गोचरीगौतमीगोपत्रीगोमुखीगुरुवा
सिनी ॥ गोपालीगोमयीगुंठागोष्ठीगोपुरवासि
नी ॥८०॥ गरुडीगरुडश्रेष्ठागारुडीगरुडध्वजा ॥
गंभीरागंडकीगंगागरुडध्वजवल्लभा ॥ ८१ ॥

गगनस्थागयावासागुणवृत्तिर्गुडोद्भवा ॥ देकार
रूपादेवेशीदृशिनीदेवतार्चिता ॥ ८२ ॥ देवरा
जेश्वरार्द्धांगीदीनदैन्यविमोचनी ॥ देशकालप
रिज्ञानादेशोपद्रवनाशिनी ॥ ८३ ॥ देवमातादेव
मोहादेवदानवमोहिनी ॥ देवेंद्रार्चितपादश्रीर्देवदे
वप्रसादिनी ॥ ८४ ॥ देशांतरीदेवरूपादेवालय
निवासिनी ॥ देशभ्रमणकृद्देवीदेशस्वास्थ्यप्रदा
यिनी ॥ ८५ ॥ देवयानादेवताचदेवसैन्यप्रपालिनी
॥ वकाररूपावाग्देवीवाचामानसगोचरी ॥ ८६ ॥
वैकुंठदेशिनीवेद्यावायुरूपावरप्रदा ॥ वक्रतुंडा

चितपदावक्रतुंडप्रदायिनी ॥ ८७ ॥ वैचित्रीचव
सुमतिर्वसुस्थानावसुप्रिया ॥ वषट्काराचचामुं
डावरारोहावरावरी ॥ ८८ ॥ वैदेहीजननीवेद्या
वैदेहीशोकनाशिनी ॥ वेदमातावेदकन्यावेदरू
पाविनोदिनी ॥ ८९ ॥ वेदांतवादिनीवेदावेदां
तनिलयामरा ॥ वेदश्रवावेदघोषावेदगानीवि
नोदिनी ॥ ९० ॥ वेदशास्त्रार्थतत्त्वज्ञावेदमार्ग
प्रदर्शिनी ॥ वैदिककर्मफलदावेदसागरतारिणी
॥ ९१ ॥ वेदवादीवेदगृह्यावेदाश्वरथवाहिनी ॥
वेदचक्रावेदवंद्यावेदांगीवेदवित्कविः ॥ ९२ ॥ स्य

कारूपाश्यामांगीश्यामाश्यामसरोरुहा ॥ श्या
माकाश्यालवृक्षाचशतपत्रानिकेतना ॥ ९३ ॥
सर्ववृक्षसंनिविष्टाचसर्वसंप्रेमणीसदा ॥ सव्या
पसव्यदासव्यासध्रीचीचसहायिनी ॥ ९४ ॥ सक
लासागरासारासर्वभौमस्वभाविनी ॥ संतोषज
ननीसेव्यासर्वेशीसर्वरंजनी ॥ ९५ ॥ सरस्वती
समाराध्यासमदासिंधुसेविनी ॥ सन्मोहिनीस
दामोहासर्वमांगल्यदायिनी ॥ ९६ ॥ समस्तभु
वनेशानीसर्वकामफलप्रदा ॥ सर्वसिद्धिप्रदासा
ध्वीसर्वज्ञानप्रदायिनी ॥ ९७ ॥ सर्वदारिद्र्यश

मनीसर्वंदुःखविमोचनी॥सर्वरोगप्रशमनीसर्वपा
पविमोचनी ॥ ९८॥ समदृष्टिःसमगुणासर्वसाक्षी
सहायिनी ॥ सामर्थ्यवाहिनीसंख्यासांद्रानंदप
योधरी ॥ ९९ ॥ संकीर्णमंदिरस्थायीसाकेतकु
लपालिनी ॥ संहारीशंकरीशौरीसाकेतपुरवासि
नी ॥ १०० ॥ संबोधनीसमुत्तिष्ठासम्यग्ज्ञान
स्वरूपिणी ॥१०१॥ सम्पत्करीसमानांगीसर्वभा
वसुसंस्थिता ॥ संबोधिनीसमानंदासन्मार्गकुल
पालिनी ॥ १०२ ॥ संजीवनीसर्वमेधासभ्यासंप
त्प्रदायिनी ॥ सामिद्धासामिधासीनासामान्यासा

मवेदिनी ॥ १०३ ॥ समुत्तीर्णासदाचारासंहारा
सर्वपावनी ॥ सर्पिणीसर्पमाताचसर्पदष्टाविमो
चनी ॥ १०४ ॥ सर्वयागप्रशमनीसर्वज्ञत्वफल
प्रदा ॥ संक्रमासंक्रमासिंधुःसर्गासंग्रामपूजिता
॥ १०५ ॥ संकटासंकटाहारीसकुंकुमविलेपना
॥ सुमुखासुमुखस्थायीसांगोपांगार्चनप्रिया ॥
॥ १०६ ॥ संस्तुतासंस्तुतिःप्रीतिःसत्यवादीस
दासुखी ॥ धींकाररूपाधींमाताधींराधींरप्रसादि
नी ॥ १०७ ॥ धींरोत्तमाधींरधींराधींरस्थाधींर
शेखरा ॥ स्थितिधैर्य्यास्थविष्ठाचस्थपतिस्थल

विग्रहा ॥ १०८॥ धीराधाराधीरवंद्याधीपतिर्धीर
मानसा॥ धीपदाधीपदस्थायीधीशानाधीप्रदास
खी॥ १०९॥मकाररूपीमैत्रेयीमहामंगलदेवता
॥मनोवैकल्यशमनीमलयाचलवासिनी॥११०॥
मलयध्वजराजश्रीमीनाक्षीमधुरालया ॥ महादे
वीमहारूपामहाभैरवपूजिता ॥ १११ ॥ मनुवि
द्यामंत्रमातामंत्रवश्यामहेश्वरी ॥ मत्तमातंगग
मनामधुरामेरुमंडपा ॥ ११२ ॥ महागुप्तामहा
भूतामहाभयविनाशिनी ॥ महाशौरीमहामंत्री
महावैरिविनाशिनी ॥ ११३ ॥ महालक्ष्मीर्महा

गौरीमहिषासुरमर्दिनी ॥ महेशमंडलस्थाचम
धुरागमवर्जिता ॥ ११४ ॥ मेधामेधाकरीमेध्या
माधवीमधुमर्दिनी ॥ मंत्रामंत्रमयीमान्यामाया
महिममंत्रिणी ॥ ११५ ॥ मायारूपीमायधारीमा
यस्थामायवादिनी ॥ मायासंकल्पजननीमाया
मायविनोदिनी ॥ ११६ ॥ मायाप्रपंचजननीमाया
संहाररूपिणी ॥ मायामंत्रप्रसादाचमायाजनवि
मोहिनी ॥ ११७ ॥ महापरामहारूपामहाविघ्नवि
नाशिनी ॥ महानुभावामंत्रेशीमहामंगलदेवता
॥ ११८ ॥ हिंकारस्थाहृषीकेशीहितकार्यप्रवर्द्धि

नी ॥ हीनोपाधिविनिर्मुक्ताहीनलोकविमोचनी
॥ ११९ ॥ ह्रींकारा ह्रीमती ह्रीं ह्रीं ह्रींदेवी ह्रींस्व
भाविनी ॥ ह्रीमती ह्रींव्रतीहृत्स्था ह्रींशिवा ह्रीं
कुलोद्भवा ॥१२०॥ हितवादीहितप्रीताहितकारु
ण्यवर्द्धिनी ॥ हिताशनीहितक्रोधाहितकर्मफलप्र
दा ॥१२१॥ हिमाहिमसुताहेमाहेमाचलनिवासि
नी॥ हेताहिमप्रदाहाराहोत्राहोतृहुतप्रदा॥१२२॥
हिमस्थाहिमजाहेमाहितकर्मस्वभाविनी·१२३॥
धीकाररूपाधिषणाधर्मरूपाधनेश्वरी ॥ धनुर्धरा
धराधाराधर्मकर्मफलप्रदा ॥ १२४ ॥ धर्माचारा

धर्मसाराधर्ममध्यनिवासिनी॥ धनुर्वेदीधनुर्वादी
धन्याधूर्तविनाशिनी ॥ १२५ ॥ धनधान्याधेनु
रूपाधनाढ्याधनदायिनी ॥धनेशीधर्मनिरताधर्म
राजप्रसादिनी ॥ १२६ ॥ धर्मस्वरूपाधर्मेशीध
र्माधर्मविचारिणी ॥ धर्मसूक्ष्माधर्मसाक्षीधर्मिष्ठा
धर्मगोचरा ॥ १२७ ॥ योंकाररूपायोगेशीयोग
स्थायोगरूपिणी ॥ योगायोगोपमाराध्यायो
गमार्गनिवासिनी॥१२८॥ योगासनस्थायोगेशी
योगमायाविलासिनी ॥ योगायोगोपमाराध्या
योगांगीयोगविग्रहा॥१२९॥ योगवासीयोगभो

गीयोगमार्गप्रदर्शिनी ॥ १३० ॥ योधायोधवती
योध्याऽयोध्यायोधनतत्परा॥ योधिनीयोधिनी
सेव्यायोधज्ञानप्रबोधिनी॥१३१॥ योगेश्वरप्राण
नाथायोगीश्वरहृदिस्थिता॥योगायोगक्षेमकर्त्री
योगक्षेमविहारिणी॥१३२॥योगराजेश्वराराध्या
योगानंदस्वरूपिणी ॥१३३॥ नवासिद्धिसमारा
ध्यानारायणमनोहरी॥नारायणीनवाधारानवब्र
ह्मार्चितासदा ॥१३४॥ नगेंद्रतनयाराध्यानामरू
पविवर्जिता ॥ नारसिंहार्चितपदानवबंधविमोच
नी ॥ १३५ ॥ नवग्रहार्चितपदानवबंधविमोच

नी ॥ नैमित्तिकार्थनपदानंदितारिविनाशिनी ॥ १३६ ॥ नवसूत्रविधानज्ञानैमिषारण्यवासिनी ॥ नवपीठस्थितादेवीनवर्षिगणसेविता ॥ १३७॥ नवचंदनादिग्धांगीनवकुंकुमधारिणी ॥ नववस्त्रपरीधानानवरत्नविभूषणा ॥१३८॥ नवभस्मविदिग्धांगीनवचंद्रकलाधरा ॥ प्रकाशरूपाप्राणेशीप्राणसंरक्षणीसदा ॥ १३९॥ प्राणसंजीवनीप्राणाप्राणाप्राणप्रबोधिनी ॥ प्रज्ञाप्रज्ञाप्रभाप्राच्याप्रतीचीप्रबुधाप्रिया ॥ १४० ॥ प्राचीराप्रणयांतस्थाप्रभातज्ञानरूपिणी ॥ प्रभातकर्मसंतुष्टप्राणायाम

परायणा ॥ १४१ ॥ प्रायज्ञाप्रणवाप्राप्ताप्रवृत्तिः
प्रकृतिःपरा ॥ १४२ ॥ प्रबंधाप्रबुधासाक्षीप्राज्ञा
प्रारब्धनाशिनी ॥ प्रबोधानिरताप्रेक्ष्याप्रबंधप्राण
साक्षिणी ॥ १४३ ॥ प्रयागतीर्थनिलयाप्रत्यक्षा
परमेश्वरी ॥ प्रणवाद्यंतानिलयाप्रणवादिप्रचोद
यात् ॥ १४४ ॥ चोंकाररूपाचोरघ्नीचोरबाधावि
नाशिनी ॥ चेतनाचेतनाशीताचौराचौर्याचम
त्कृतिः ॥ १४५ ॥ चक्रवर्तित्वधारीचचाक्रिणीच
क्रधारिणी ॥ चिरंजीवीचिदानंदाचिद्रूपाचिद्वि
लासिनी ॥ १४६ ॥ चिंताचित्तप्रशमनीचिं

गा० ७८ स० ८

तितार्थफलप्रदा ॥ चांपेयीचंपकप्रीताचंडीचं
डाट्टहासिनी ॥ १४७ ॥ चंडेश्वरीचंडमाता
चंडमुंडविनाशिनी ॥ चकोराक्षीचिरप्रीता
चिकुराचिकुरप्रिया ॥ १४८ ॥ चैतन्यरूपिणीचै
त्रीचेतनाचित्तसाक्षिणी ॥ चित्राचित्रविचित्रांगी
चित्रगुप्तप्रसादिनी ॥ १४९ ॥ चलनाचलसंस्था
यीचापिनीचलचित्रिणी ॥ चंद्रमंडलमध्यस्था
कोटिचंद्रसुशीतला ॥ १५० ॥ चंद्रानुजसमारा
ध्याचंद्रचंद्रमहोदरी॥चर्चितारिश्चन्द्रमाताचन्द्र
कांताचलेश्वरी ॥ १५१ ॥ चराचरनिवासाचचक्र

७८

पाणिसहोदरी ॥ दकाररूपादत्तश्रीर्दारिद्र्यच्छे
दकारिणी ॥ १५२ ॥ दंतिनीदंडिनीदीनाद
रिद्रादीनवत्सला ॥ दक्षाराध्यादक्षकन्यादक्षय
ज्ञविनाशिनी ॥ १५३ ॥ दक्षादाक्षायणीदक्षादी
क्षादक्षवरप्रदा ॥ दक्षिणादक्षिणाराध्यादक्षिणा
मूर्तिरूपिणी ॥ १५४ ॥ दयावतीदमन्वतीदनुजा
दिर्दयानिधिः ॥ दंतशोभानिभादैवदमनादाडि
मस्तनी ॥ १५५ ॥ दंडादमयितादंडीदंडादंडप्र
सादिनी ॥ दंडकारण्यनिलयादंडकारिविनाशि
नी ॥ १५६ ॥ दंष्ट्राकरालप्रद्वेषीदंडशोभादला

दली ॥ दरिद्रारिष्टशमनीदमादमनपूजिता ॥
॥ १५७ ॥ दानवार्चितपादश्रीर्द्रविणाद्राविणीद
या ॥ दामोदरीदानवारिर्दामोदरसहोदरी ॥
॥ १५८ ॥ दातादानप्रियादात्रीदानश्रीर्दीनदंड
पा ॥ दम्पतीदम्पतीदूर्वादधिदुग्धादयादमा ॥
॥ १५९ ॥ दाडिमीबीजसंदोहदंतपंक्तिविराजि
ता ॥ दर्पणादर्पणस्वच्छाद्रुममंडलवासिनी ॥
॥ १६० ॥ दशावतारजननीदशदिग्दीपपूजिता
॥ दयादशदिशादश्यादशदासीदयानिधिः ॥
॥ १६१ ॥ देशकालपरिज्ञानादेशकालविशोधि

दशग्रीवप्रदर्पहा ॥
नी ॥ दशम्यादिकलाराध्यादशग्रीवप्रदर्पहा ॥
॥ १६२ ॥ दशापराधशमनीदशवृत्तिफलप्रदा ॥
॥ यात्काररूपिणीयाज्ञीयादवीयादवार्चिता ॥
॥ १६३ ॥ ययातिपूजनप्रीतायाज्ञिकीयाजकप्रि
या ॥ यादवीयातनायातायामपूजाफलप्रदा ॥
॥ १६४ ॥ यशस्विनीयमाराध्यायमकन्याय
तीश्वरी ॥ यमादियोगसंतुष्टायोगींद्रहृदिसंगमा
॥ १६५ ॥ यमोपाधिविनिर्मुक्तायशस्यविधिर
च्युता ॥ यातनायातनादेहायात्रापापादिवर्जिता
॥ १६६ ॥ इत्येतत्कथितंदेविरहस्यंसर्वकाम

दं ॥ सर्वपापप्रशमनंसर्वतीर्थफलप्रदम्॥ ॥१६७॥
सर्वरोगहरंपुण्यंसर्वज्ञानमयंशिवम् ॥ सर्वसि
द्धिप्रदंदेविसर्वसौभाग्यवर्द्धनम् ॥ १६८ ॥ आ
युष्यंवर्द्धतेनित्यंलिखितंयत्रतिष्ठति ॥ नचौरा
ग्निभयंतस्यनचभूतभयंक्वचित् ॥ १६९ ॥ किंपु
नर्वरुणोक्तेनतथापिचवदाम्यहम् ॥ सकृच्छ्रवण
मात्रेणकोटिजन्माघनाशनम् ॥ १७० ॥ महा
पातककोटीनांभंजनंस्मृतिमात्रतः॥ अपवादक
दौर्भाग्यशमनंभुक्तिमुक्तिदम् ॥१७१॥विषरोगा
दिदारिद्र्यमृत्युसंहारकारणम् ॥ सप्तकोटिमहा

मंत्रपारायणफलप्रदम् ॥१७२॥ शतरुद्रीयकोटी
नांजपयज्ञफलप्रदम् ॥ चतुःसमुद्रपर्यंतभूदानंत
त्फलंशिवे ॥१७३॥ सहस्रकोटिगोदानफलदंस्मृ
तिमात्रतः॥कोट्यश्वमेधफलदंजरामृत्युनिवारण
म् ॥ १७४ ॥ कन्याकोटिप्रदानेनयत्फलंलभते
नरः ॥ तत्फलंलभतेसम्यक्नाम्नांदशशतीजपा-
त ॥ १७५ ॥ यःशृणोतिमहाविद्यांश्रावयेद्वास-
माहितः ॥ सोपिमुक्तिमवाप्नोतियत्रगत्वानशोच
ति ॥ १७६ ॥ ब्रह्महत्यादिपापानांनाशःस्याच्छ्र
वणेनच ॥ किंपुनःपठनादस्यमुक्तिःस्यादनपा

यिनी ॥ १७७ ॥ इदंरहस्यंपरमंपुराणंस्वस्त्य
यनंमहत् ॥ यःसकृद्वापठेत्स्तोत्रंशृणुयाद्वास
माहितः ॥ १७८ ॥ लभतेचततःकामानंतेब्रह्मप
दंव्रजेत् ॥ सचशत्रून्जयेत्सद्योमातंगानिवके
सरी ॥ १७९ ॥ इतिश्रीमद्रुद्रयामलेशिवपार्वती
संवादेब्रह्मप्रोक्तंश्रीगायत्र्यामंत्रवर्णात्मकंदिव्य
सहस्रनामस्तोत्रंसम्पूर्णम् ॥
॥ शुभंभूयात् ॥ मंगलमस्तु ॥

॥ अथ गायत्रीपटलप्रारंभः ॥

ॐअस्यश्रीब्रह्मशापविमोचनमंत्रस्य निग्रहानु

ग्रहकर्ताप्रजापतिर्ऋषिः ॥ कामदुघागायत्रीछं
दः ॥ ॐ ब्रह्मशापविमोचनीगायत्रीशक्तिर्दे
वता ब्रह्मशापविमोचनार्थेजपेविनियोगः ॥ स
वितुर्ब्रह्मोमेत्युपासनात्तद्ब्रह्मविदोविदुस्ताप्रयतं
तिर्धाराः ॥ सुमनसावाचाममाग्रतः ॥ ब्रह्मशापा
द्विमुक्ताभव ॥ ॐविश्वामित्रशापविमोचनमंत्र-
स्य नूतनसृष्टिकर्ता विश्वामित्रऋषिः॥ वाग्दोहा
गायत्रीछंदः ॥ भुक्तिमुक्तिप्रदाविश्वामित्रानुगृ-
हीतागायत्रीशक्तिःसविता विश्वामित्रशापवि-
मोचनार्थेजपेविनियोगः ॥ तत्त्वानिचांगेष्वग्नि-

चितोधियांसः त्रिगर्भायदुद्भवांदेवाश्चोचिरोविश्व
सृष्टिं तांकल्याणीमिष्टकरींप्रपद्येयन्मुखान्निसृ-
तोवेदगर्भः॥ ॐ गायत्रीत्वंविश्वामित्रशापाद्वि-
मुक्ताभव ॐ वसिष्ठशापविमोचनमंत्रस्यवसि
ष्ठऋषिः विश्वोद्भवोगायत्रीछंदः॥ वसिष्ठानुगृ
हीतागायत्रीशक्तिर्देवतावसिष्ठशापविमोचनार्थे
जपेविनियोगः॥ तत्वानिचांगेष्वग्नेचितोधि
यांसः ध्यायंतिविष्णोरायुधानिबिभ्रत्॥ जना
नतासोपरमंचशश्वत्॥ गायत्रीमासाच्छुरनुत्त
मंचधाम॥ ॐ गायत्रीवसिष्ठशापाद्विमुक्ताभव॥

सोहमर्कमहंज्योतिरर्कः ज्योतिरहंशिवः ॥ आ
त्मज्योतिरहंशुल्कशुल्कज्योतिरसोंहमों ॥ अ
होविष्णुमहेशेशोदिव्येसिद्धिसरस्वति ॥ अजरे
अमरेचैवदिव्ययोनिनमोस्तुते ॥ शुद्धंगायत्री
ध्यानं॥ यद्देवैःसुरपूजितंपरतरंसामर्थ्यतारात्मि
कं पुन्नागाम्बुजपुष्पनागबकुलैः केशैः शुकैर-
र्चितं॥ नित्यंध्यानसमस्तदीप्तिकरणंकालाग्निरु
द्दीपनं तत्संहारकरंनमामिसततंपातालसंस्थं
मुखं॥ न्यासः॥ ॐ तत्पादांगुलीपर्वभ्यांनमः
॥ ॐसपादांगुलिभ्योनमः॥ ॐविजंघा॰ ॥ ॐतु

गा० ८०

जांनुभ्यांनमः ॥ ॐवऊरुभ्यांनमः ॥ ॐरेशिश्ना
यनमः ॥ ॐणिवृषणाभ्यांनमः ॥ॐयंकटयैनमः
॥ ॐभर्नाभ्यैनमः ॥ ॐगोउदरायनमः ॥ ॐदे
स्तनाभ्यांनमः ॥ ॐवउरसेनमः ॥ ॐस्थकंठा
यनमः ॥ ॐधीदंतेभ्योनमः ॥ ॐमतालुनेनमः
॥ ॐ हिनासिकायैनमः ॥ ॐ धिनेत्राभ्यांनमः
॥ ॐ योभ्रूभ्यांनमः ॥ ॐ योललाटायनमः ॥ ॐ
नःपूर्वमुखायनमः ॥ ॐ प्रदक्षिणमुखायनमः ॥
ॐ चोपश्चिममुखायनमः ॥ ॐदउत्तरमुखायन
मः ॥ ॐ यातमूर्ध्नेनमः ॥ ॐ इतिवर्णन्यासः ॥

१० ९ ८०

ॐ तत्सवितुरंगुष्ठाभ्यांनमः ॥ ॐ वरेण्यं तर्जनी
भ्यांनमः ॥ ॐ भर्गोदेवमध्यमाभ्यांनमः ॥
ॐ स्यधीमाहिअनामिकाभ्यांनमः ॥ॐ धियो
योनःकनिष्ठिकाभ्यांनमः ॥ ॐ प्रचोदयात्
करतलकरपृष्ठाभ्यांनमः ॥ अथदेहन्यासः ॥
ॐ भूः पादयोः ॥ ॐ भुवः जान्वोः ॥ ॐ
स्वः नाभौ ॥ ॐ महः हृदये ॥ ॐ जनःक
ण्ठे ॥ ॐ तपः ललाटे ॥ ॐ सत्यंमूर्ध्नि ॥ ॐ
तत्पादयोः ॥ ॐ सवितुर्जान्वोः ॥ ॐ वरेण्यंस्कं
धयोः ॥ ॐ भर्गोहृदये ॥ ॐ देवस्यकंठे ॥ ॐ धी

महिवक्त्रे ॥ ॐ धियोयोनेत्रे ॥ ॐनःमुखे ॥ ॐ
प्रचोदयात् अस्त्रायफट् ॥ ॐआपःअंगुष्ठाभ्यां
नमः ॥ ॐज्योतिस्तर्जनीभ्यांनमः ॥ ॐ रसो
मध्यमाभ्यांनमः ॥ ॐअमृतं अनामिकाभ्यांन
मः ॥ ॐब्रह्मकनिष्ठिकाभ्यांनमः ॥ ॐ भूर्भुवः
स्वरों करतलकरपृष्ठाभ्यांनमः ॥ ॐ अग्नयेहृ
दयायनमः॥ॐ वायवेशिरसेस्वाहा ॥ ॐ सूर्याय
शिखायैवषट् ॐ ब्रह्मणेकवचायहुम् ॥ ॐ विष्ण
वेनेत्रत्रयायवौषट् ॥ ॐ रुद्रायअस्त्रायफट् ॥ इ
तिन्यासः ॥ अथवेदादिगीतायाःप्रसादजननंवि

धिम् ॥ गायत्र्याःसंप्रवक्ष्यामिधर्मार्थकाममो
क्षदम् ॥ १ ॥ नित्यनैमित्तिकेकाम्येतृतीयेतप
वर्द्धने ॥ गायत्र्यास्तुपरंनास्तिइहलोकेपरत्रच ॥
॥ २ ॥ मध्याह्नेमितभुग्मौनीत्रिस्थानार्चनतत्परः
॥ जपेल्लक्षत्रयंधीमान्नान्यमानसकस्तुयः ॥ ३ ॥
॥ कर्मभिर्योजपेत्पश्चात्क्रमशःस्वेच्छयापिवा ॥
यावत्कार्यंनकुर्वीतनलोपेत्तावताव्रतम् ॥ ४ ॥
आदित्यस्योदयेस्नात्वासहस्रंप्रत्यहंजपेत् ॥ आ
युरारोग्यमैश्वर्यंधनंचलभतेध्रुवम् ॥ ५ ॥ त्रिरा
त्रोपोषितःसम्यग्घृतंहुत्वासहस्रशः ॥ सहस्रंला

भमाप्नोतिहुत्वाग्नौखदिरेंधनम् ॥ ६ ॥ पलाशैः
समिधैश्चैवघृताक्तानांहुताशने ॥ सहस्रंलाभमा
प्नोतिराहुसूर्यसमागमे ॥ ७ ॥ हुत्वातुखदिरंवह्नौ
घृताक्तंरक्तचंदनम् ॥ सहस्रहेममाप्नोतिराहुचंद्र
समागमे ॥ ८ ॥ रक्तचंदनमिश्रंतुसघृतंहव्यवा
हने ॥ हुत्वागोमयमाप्नोतिसहस्रंगोमयंद्विजः ॥
॥ ९ ॥ जातीचंपकराजार्ककुसुमानांसहस्रशः॥
हुत्वावस्त्रमवाप्नोतिघृताक्तानांहुताशने ॥ १० ॥
सूर्यमंडलबिम्बेचहुत्वातोयंसहस्रशः ॥ सहस्रंप्रा
नुयाद्धेमरौप्यमिंदुमयेहुते ॥ ११ ॥ अलक्ष्मी

पापसंयुक्तेमलव्याधिविनाशके ॥ मुच्येत्सहस्र
जाप्येनस्नायाद्यस्तुजलेनवै ॥ १२ ॥ गोघृतेन
सहस्रेणलोध्रेणजुहुयाद्यदि ॥ चौराग्निमारुतोत्था
निभव्यानिनभवंतिवै ॥१३॥ क्षीराहारोजपेल्लक्ष-
मपमृत्युमपोहति॥घृताशीप्राप्नुयान्मेधांबहुवि-
ज्ञानसंचयाम् ॥१४॥ हुत्वावेतसपत्राणिघृताक्ता
निहुताशने ॥ लक्षाधिपत्यपदवींसार्वभौमंनसं-
शयः ॥ १५ ॥ लक्षेणभस्महोमस्यहुत्वाह्युत्तिष्ठते
जलात्॥ आदित्याभिमुखंस्थित्वानाभिमात्रज-
लेशुचौ ॥१६॥ गर्भपातादिप्रदराश्चान्येस्त्रीणांम-

हारुजः॥ नाशमेष्यंतितेसर्वेंमृतवत्सादिदुःखदाः
॥ १७॥ तिलानांलक्षहोमेनघृताक्तानांहुताशने॥
सर्वकामसमृद्धात्मापरंस्थानमवाप्नुयात् ॥ १८ ॥
यवानांलक्षहोमेनघृताक्तानांहुताशने ॥ सर्वका
मसमृद्धात्मापरांसिद्धिमवाप्नुयात् ॥ १९ ॥ घृ
तस्याहुतिलक्षेणसर्वान्कामानवाप्नुयात् ॥ पंच
गव्याशनोलक्षंजपेज्जातिस्मृतिर्भवेत् ॥ २० ॥ त
देवह्यनलेहुत्वाप्राप्नोतिबहुसाधनम् ॥ अन्नादिहु
वनान्नित्यमन्नाद्यंचभवेत्सदा ॥ २१ ॥ जुहुया
त्सर्वसाध्यानामाहुत्यायुतसंख्यया ॥ रक्तसि

द्धार्थकान्हुत्वासर्वान्साधयतेरिपून् ॥ २२ ॥
लवणंमधुसंयुक्तंहुत्वासर्ववशीभवेत् ॥ हुत्वातुक
रवीराणिरक्तानिज्वालयेज्ज्वलं ॥ २३ ॥ हुत्वा
भीलातकंतैलंदेशादेवप्रचालयेत् ॥ हुत्वातुनिम्ब
पत्राणिविद्वेषशांतयेनृणां ॥ २४ ॥ रक्तानांतंडु
लानांचघृताक्तानांहुताशने ॥ हुत्वाबलमवाप्नो
तिशत्रुभिर्नसजीयते ॥ २५ ॥ प्रत्यानयनसिद्ध्य
र्थंमधुसर्पिःसमन्वितम् ॥ गवांक्षीरंप्रदीप्तेग्नौजु
ह्वतस्तत्प्रशाम्यति ॥ २६ ॥ ब्रह्मचारीजिताहा
रोयःसहस्रत्रयंजपेत् ॥ संवत्सरेणलभतेधनैश्व

र्यंनसंशयः ॥ २७ ॥ शमीबिल्वपलाशानामर्कस्यतुविशेषतः ॥ पुष्पाणांसमिधश्चैवहुत्वाहेममवाप्नुयात् ॥ २८ ॥ आब्रह्मत्र्यंबकादीनांयस्यायतनमाश्रितः ॥ जपेल्लक्षंनिराहारःसतस्यवरदोभवेत् ॥ २९ ॥ बिल्वानांलक्षहोमेनघृताक्तानांहुताशने ॥ परांश्रियमवाप्नोतियदिनभ्रूणहाभवेत् ॥ ३० ॥ पद्मानांलक्षहोमेनघृताक्तानांहुताशने ॥ प्राप्नोतिराज्यमखिलंसुसंपन्नमकंटकम् ॥ ३१ ॥ पंचविंशतिलक्षेणदधिक्षीरंहुताशने ॥ स्वदेहेसिद्ध्यतेजंतुःकौशिकस्यमतंतथा ॥३२॥

एकाहंपंचगव्याशीएकाहंमारुताशनः ॥ एका
हंचद्विजोन्नाशीगायत्रीजपउच्यते ॥ ३३ ॥ म
हारोगाविनश्यंतिलक्षजप्यानुभावतः ॥ ३४ ॥
शतेनगायत्र्याःस्नात्वाशतमंतर्जलेजपेत् ॥ श
तेनयस्त्वपःपीत्वासर्वपापैःप्रमुच्यते ॥ ३५ ॥ गो
घ्नःपितृघ्नमातृघ्नौब्रह्महागुरुतल्पगः ॥ स्वर्णहारी
तैलहारीयस्तुविप्रःसुरांपिबेत् ॥ ३६ ॥ चंदन
द्वयसंयुक्तंकर्पूरंतंडुलंयवम् ॥ लवंगंसुफलंचा
ज्यंसिताचाम्रस्यदारुकैः॥३७॥ अयंन्यूनविधिः
प्रोक्तोगायत्र्याःप्रीतिकारकः ॥ एवंकृतेमहासौ

स्वयंप्राप्नोतिसाधकोध्रुवं ॥ ३८ ॥ अन्नाज्यभोजनंहुत्वाकृत्वावाकर्मगर्हितं ॥ नसीदेत्प्रतिगृह्णानोमहीमपिससागराम्॥ ३९ ॥ येचास्यउत्थितालोकेग्रहाः सूर्यादयोभुवि ॥ तेयांतिसौम्यतांसर्वेशिवेइतिनसंशयः ॥ ४० ॥

॥ इति गायत्रीपटलं समाप्तम् ॥

॥ गायत्रीपंचांगं समाप्तम् ॥

इदं पुस्तकं कल्याणनगर्यां श्रीकृष्णदासात्मज गंगाविष्णुना स्वकीये लक्ष्मीवेंकटेश्वरमुद्रणालयेऽङ्कितम् ।
( द्वितीया वृत्तिः )—संवत् १९५२ शके १८१७

॥ श्रीः ॥

ब्राह्मण्यमूलापि च क्षत्रवैश्यानां धर्मपालनहेतुभूतेयं गायत्री तस्याः पू-
जापाठादि सर्वेषामपेक्षतेऽतोस्माकमासीन्मनीषैतन्मुद्रणे । एतस्मिन्नेव काले
संवत् १८२३ तमे लिखितं गायत्रीपञ्चाङ्गपुस्तकं यत्नेन संगृहीतमयोध्या-
मण्डलांतर्गतरायबरेलीप्रान्तस्थदौलतपुरनिवासिमहावीरप्रसादद्विवेदि ( हेड
टेलिग्राफ इन्स्पेक्टर आय० एम्० रेलवे झांसी तथा विहारवाटिका विन-
यविनोद स्नेहमाला व ऋतु तरंगिणीके कर्ता ) एत्येतैः प्रेषितम् । तथा च
द्वितीयं प्राचीनं पुस्तकं अर्गलपुरनिवासि पण्डितचिरंजीलालबृजलाल
इत्येतैः प्रेषितम् । अत उक्तपण्डितद्वयस्य बहूपकारभारं शिरसा धारयामि ।
तथाच अस्मत्समीपमपि कानिचिदासन् पुस्तकानि । इतीमानि संमेल्य
रावेरग्रामनिवासिपरशुरामभट्टतनयगोविंदशास्त्रिभिः संशोध्य मुद्रितम् । तदे-
तत्पुनर्द्वितीयवारं मुद्रितम् । एतत्पुनर्मुद्रणाद्यधिकारः १८६७ ख्रिस्ताब्दिक
२५ तम नियमानुसारेण मया स्वाधीनं रक्षितः ।

श्रीकृष्णदासात्मज–गंगाविष्णुः

"लक्ष्मीवेंकटेश्वर" छापाखाना, कल्याण–मुंबई.

जाहि-

रात.

# शाक्तप्रमोद अर्थात् दशमहाविद्याका पंचांग।

सम्पूर्णभारत निवासी द्विजोत्तमों को विदित हो कि, यह अलभ्य क्लिष्टता-से प्राप्त, परमगुप्त, अत्युत्तम नवीन ग्रन्थ हमारे यहां छपा है। इसमें आदि शक्ति जगन्माताके दशों स्वरूप अर्थात् काली, तारा, त्रिपुरसुंदरी, भुवने-श्वरी, छिन्नमस्ता, त्रिपुरभैरवी, धूमावती, बगलामुखी, मातंगी, कमलात्मि-का, तथा पञ्च देवता–दुर्गा शिव, गणेश, सूर्य, विष्णु, और वेदोक्त, शास्त्रोक्त, मंत्रोक्त, तंत्रोक्त विस्तारपूर्वक लिखा है तथा जिनके चित्र (तस्वीरें) भी फोटोग्राफानुसार यथावत् खींची गई हैं इस ग्रंथका मूल्य ५ रुपया.

# श्रीमद्गोविन्दराजीय'भूषण' 'तनिश्लोकी' 'रामा-नुजी' (संस्कृत)टीकाओंसे विभूषित श्रीमद्वाल्मीकीयरामायण।

जगद्वन्दन, दशरथनन्दन, श्रीरामचन्द्र महाराज के विमल यश का यह

भक्तिरस लालस श्रीमन्तों और विद्यारसिक महानुभावों के मज्जनार्थ इस ग्राहक से प्रगट हुआ है करुणावरुणालय, दयापारङ्गत, विश्वव्यापी, परम प्रभु श्रीराम का वह अतुल यश किस को प्रेममग्न नहीं करता? इस ग्रंथमें श्रीरामानुजमतानुयायी गोविन्दाचार्य स्वामी के पूर्णपांडित्य, लेखक्षमता, कल्पनाकानन और विद्वन्मनोरंजक शक्ति की प्रतिभास्वरूप व्याख्या बहुत विस्तार से की गई है कि जो एक सांप्रदायिक महानुभाव के द्वारा होने पर भी, स्मार्तादि किसी मत के विरुद्ध नहीं. वरु, सारे मतों को परम मान्य अपनी अलौकिक छटा के कारण गंभीराशय विद्यावीरों से विशेष आदरणीय है. नमूना देखने की इच्छा हो तो पत्र भेजनेसे बिनादाम भेजा जायगा. इस सर्वांगसुन्दर, बृहत, प्रामाणिक ग्रंथ का मूल्य केवल २५ रु० नियत किया गया है. महसूल ३ रु० 'निरुक्ति' 'निर्वचन' 'भगवद्गुणदर्पणाख्य भाष्य' तीन व्याख्याओं से विभूषित नीचे लिखा हुआ "श्रीविष्णुसहस्रनाम ( बारह हजार ) ग्रंथ"

कमीशनमें दिया जायगा.

श्रीविष्णुसहस्रनाम-भगवद्गुणदर्पणभाष्य निर्वचन और निरुक्ति इन तीन संस्कृत टीकासहित छपके तैयार है, यह पुस्तक बहुत बडा है, की० ५ रु० । २ भगवद्गुणदर्पणभाष्यकी व्युत्पत्ति और उसके अनुसार दीपिका नामक भाषाटीका सहित, कीमत १ रु० । ३ शंकराचार्यकृत भाष्यकी व्युत्पत्ति और उसके अनुसार चंद्रिका नामकभाषाटीका सहित कीमत १२ आना । केवल भाषाटीकासहित गुटका, की० ८ आ० ।

गीता पंचरत्न ( गुटका ) भाषाटीकासहित. ( पांचों रत्नोंकी सरल सुबोध भाषाटीका छपके तैयार है. ) की० २ रु० ।

## स्वरतालसमूह ( सितारका पुस्तक. )

इसमें स्वर, श्रुति, मूर्छना व राग, रागिणी, पुत्र, भार्या, लयादिका वर्णन व ठेका, पखवाजकी परने व सितारकी गतें व तोडे फिरोजखानी मशीतखानी बाजकी व बोल, तराना, चतुरङ्ग, सर्गम सब रागोंमें और नये २ तालोंमें बनाकर लिखी हैं. और अलाप जोडभी लिखा है कि,

गाय नमः॥ ॥ओं नमो भग-

वत्यै॥ॐ नमो नमो भवान्यै॥ॐ शंखचक्र

शूलशरचापकरां त्रिनेत्रां तिग्मेतरांशक-

लया विलसत्किरीटाम्॥ सिंहस्थितामम-

रसिद्धनुतां च दुर्गां दुर्गां निभां दुरितदुः-

खहरां नमामि॥१॥ ॐ अकुलकुलपतंती

चक्रमध्ये स्फुरंती मधुरमधु पिबंती कंट-

कान्भक्षयंती ॥ दुरितमपहरंती साधका-
न्पोषयंती जयति जगति देवी सुंदरी
क्रीडयंती ॥ २ ॥ चतुर्भुजामेकवक्त्रां पूर्णे-
न्दुवदनप्रभाम् ॥ खड्गशक्तिधरां देवीं वर-
दाभयपाणिकाम् ॥ ३ ॥ प्रेतसंस्थां
महारौद्रीं भुजगेनोपवीतिनीम् ॥ भवानीं
कालसंहारबद्धमुद्राविभूषिताम् ॥ ४ ॥

स०

१

जगत्स्थितिकरीं ब्रह्मविष्णुरुद्रादिभिः सु-
रैः॥स्तुतांतां परमेशानीं नौम्यहं विघ्नहा-
रिणीम्॥५॥ॐनमो भवान्यै॥ॐकैलास-
शिखरे रम्ये देवदेवं महेश्वरम्॥ ध्यानोप-
रतमासीनं प्रसन्नमुखपंकजम्॥६॥ सुरा-
सुरशिरोरत्नरंजितांघ्रियुगं प्रभुम्॥ प्रण-
म्य शिरसा नंदी बद्धांजलिरभाषत॥७॥

श्रीनंदिकेश्वर उवाच ॥ ॥ देवदेव जगन्ना-
थ संशयोऽस्ति महान्मम॥ रहस्यमेकमि-
च्छामि प्रष्टुं त्वां भक्तवत्सल ॥८॥ देवता-
यास्त्वया कस्याः स्तोत्रमेतद्दिवानिशम्॥
पठ्यतेऽविरतं नाथ त्वत्तः किमपरं महत्
॥९॥इति पृष्टस्तदा देवो नंदिकेन जगद्गुरुः
प्रोवाच भगवानेको विकसन्नेत्रपंकजः॥

स०

॥ १० ॥ श्रीभगवानुवाच ॥ ॥ साधु साधु गणश्रेष्ठ पृष्टवानसि मां च यत् ॥ स्कंदस्यापि च यद्गोप्यं रहस्यं कथयामि तत्॥११॥पुरा कल्पक्षये लोकान् सिसृक्षुर्मूढचेतसः ॥ गुणत्रयमयी शक्तिर्मूलप्रकृतिसंज्ञिता ॥ १२ ॥ तस्यामहं समुत्पन्नस्तत्त्वैस्तैर्महदादिभिः ॥ चेतनेति ततः

शक्तिर्मां काप्यालिंग्य तस्थुषी ॥ १३ ॥
हेतुः संकल्पजालस्य मनोऽधिष्ठायिनी
शुभा ॥ इच्छेति परमा शक्तिरुन्मिमील
ततः परम् ॥ १४ ॥ ततो वागिति विख्याता
शक्तिः शब्दमयी पुरा ॥ प्रादुरासीज्जगन्मा-
ता वेदमाता सरस्वती ॥ १५ ॥ ब्राह्मी च
वैष्णवी सैन्द्री कौमारी पार्वती शिवा ॥

सिद्धिदा बुद्धिदा शांता सर्वमंगलदायिनी

॥ १६ ॥ तयैतत्सृज्यते विश्वमनाधारं च

धार्यते ॥ तयैतत्पाल्यते सर्वं तस्यामेव

प्रलीयते ॥ १७॥ अर्चिता प्रणता ध्याता

सर्वभावविनिश्चितैः ॥ आराधिता स्तुता

सैव सर्वसिद्धिप्रदायिनी॥ १८ ॥तस्या अ-

नुग्रहादेव तामेव स्तुतवानहम् ॥सहस्रैर्ना-

मभिर्दिव्यैस्त्रैलोक्यप्राणिपूजितैः॥ १९ ॥
स्तवेनानेन संतुष्टा मामेव प्राविवेश सा॥ त-
दारभ्य मया प्राप्तमैश्वरं पदमुत्तमम् २०॥
तत्प्रभावान्मया सृष्टं जगदेतच्चराचरम् ॥
ससुरासुरगंधर्वं यक्षराक्षसमानवम्॥ २१॥
सपन्नगं साब्धिकं च सशैलवनकाननम्॥
सराशिग्रहनक्षत्रं पंचभूतगुणान्वितम् ॥

स०

४

॥ २२ ॥ नंदिन्नामसहस्रेण स्तवेनानेन स-
र्वदा ॥ स्तुवे परापरां शक्तिं ममानुग्रहका-
रिणीम् ॥ २३ ॥ इत्युक्त्वोपरतं देवं चराच-
रगुरुं विभुम् ॥ प्रणम्य शिरसा नंदी प्रोवाच
परमेश्वरम् ॥ २४ ॥ श्रीनंदिकेश्वर
उवाच ॥ भगवन्देवदेवेश लोकनाथ जग-
त्पते ॥ भक्तोऽस्मि तव दासोऽस्मि प्रसादः

क्रियतां मयि ॥ २५ ॥ देव्याः स्तवमिमं पुण्यं दुर्लभं यत्सुरैरपि ॥ श्रोतुमिच्छाम्यहं देव प्रभावमपि चास्य तु ॥ २६ ॥

श्रीभगवानुवाच ॥ ॥ शृणु नंदिन्महाभाग स्तवराजमिमं शुभम् ॥ सहस्रैर्नामभिर्दिव्यैः सिद्धिदं सुखमोक्षदम् ॥ २७ ॥ शुचिभिः प्रातरुत्थाय पठितव्यं समाहितैः ॥

त्रिकालं श्रद्धया युक्तैर्नातः परतरः स्त-
वः ॥ २८ ॥ अथ न्यासः ॥ ॥ ॐ ए
कवीरायै अंगुष्ठाभ्यां नमः ॥ ॐ महामा-
यायै तर्जनीभ्यां नमः ॥ ॐ पार्वत्यै मध्य-
माभ्यां नमः ॥ ॐ गिरिशप्रियायै अना-
मिकाभ्यां नमः ॥ ॐ गौर्यै कनिष्ठिका-
भ्यां नमः ॥ ॐ करालिन्यै करतलकरपृ-

ष्ठाभ्यां नमः ॥ ॥ इति करन्यासः ॥ ॥
एव षडगन्यासः॥ ॥ ॐएकवीरायै हृद-
याय नमः ॥ ॐ महामायायै शिरसे स्वा-
हा ॥ ॐ पार्वत्यै शिखायै वषट् ॥ ॐ गिरि-
शप्रियायै कवचाय हुम् ॥ ॐ गौर्यै नेत्रत्र-
याय वौषट् ॥ ॐ करालिन्यै अस्त्राय फ-
ट्॥ ॥ ॐ अस्य श्रीभवानीनामसहस्र-

लक्ष्मीः शिवाप्रिया ॥ विष्णुमाया शुभा
शांता सिद्धा सिद्धसरस्वती ॥ १ ॥ क्षमा
कांतिः प्रभा ज्योत्स्ना पार्वती सर्वमंगला
हिंगुला चंडिका दांता पद्मा लक्ष्मीर्हरिप्रि
या ॥ २ ॥ त्रिपुरा नंदिनी नंदा सुनंदा सुरवं-
दिता ॥ यज्ञविद्या महामाया वेदमाता
सुधा धृतिः ॥ ३ ॥ प्रीतिः प्रथा पसिद्धा च

राभिवन्द्यामम्भोजपाशसृणिरक्तकपा-
लहस्ताम् ॥ रक्ताङ्गरागवसनाभरणां
त्रिनेत्रां ध्यायेच्छिवस्यवनितां मदविह्व-
लांगीम् ॥ ॐ बालार्कमण्डलाभासां चतु-
र्बाहुं त्रिलोचनाम् ॥ पाशांकुशशरं चापं
धारयंतीं शिवां भजे ॥ ॥ ॐ श्रीईश्वर
उवाच ॥ ॥ ॐ महाविद्याजगन्माता महा-

लक्ष्मीः शिवाप्रिया ॥ विष्णुमाया शुभा
शांता सिद्धा सिद्धसरस्वती ॥ १ ॥ क्षमा
कांतिःप्रभा ज्योत्स्ना पार्वती सर्वमंगला
हिंगुला चंडिका दांता पद्मा लक्ष्मीर्हरिप्रि
या ॥२॥ त्रिपुरा नंदिनी नंदा सुनंदा सुरवं-
दिता ॥ यज्ञविद्या महामाया वेदमाता
सुधा धृतिः ॥३॥ प्रीतिः प्रथा प्रसिद्धा च

मृडानी विंध्यवासिनी॥ सिद्धविद्या महा
शक्तिः पृथ्वी नारदसेविता ॥ ४ ॥ पुरुहूत
प्रिया कांता कामिनी पद्मलोचना॥ प्रह्ला
दिनी महामाता दुर्गा दुर्गतिनाशिनी
॥ ५ ॥ ज्वालामुखी सुगोत्रा च ज्योतिः
कुमुदहासिनी॥दुर्गमा दुर्लभा विद्या स्वर्ग
तिः पुरवासिनी॥ ६॥अपर्णा शांबरी माया

मदिरा मृदुहासिनी ॥ कुलवागीश्वरी नि-
त्या नित्यक्लिन्ना कृशोदरी ॥७॥ कामेश्व-
रीच नीला च भीरुंडा वह्निवासिनी॥लंबो-
दरी महाकाली विद्या विद्येश्वरी तथा॥८॥
नरेश्वरी च सत्या च सर्वसौभाग्यवर्धिनी॥
संकर्षणी नारसिंही वैष्णवी च महोदरी
॥९॥ कात्यायनी च चंपा च सर्वसंपत्ति-

कारिणी ॥ नारायणी महानिद्रा योगनि-
द्रा प्रभावती ॥ १० ॥ प्रज्ञापारमिता प्रज्ञा
तारा मधुमती मधु ॥ क्षीरार्णवसुधाहारा
कालिका सिंहवाहना ॥ ११ ॥ ॐकारा
च सुधाकारा चेतना कोपना कृतिः ॥
अर्धबिंदुधराधारा विश्वमाता कलावती
॥ १२ ॥ पद्मावती सुवस्त्रा च प्रबुद्धा चसर-

स्वती ॥ कुंडासना जगद्धात्री बुद्धमाता
जिनेश्वरी ॥ १३ ॥ जिनमाता जिनेंद्रा च
शारदा हंसवाहना ॥ राज्यलक्ष्मीर्वषट्कारा
सुधाकारा सुधोत्सुका ॥१४॥ राजनीति-
स्त्रयीवार्ता दंडनीतिः क्रियावती ॥ सद्भू-
तिस्तारिणी श्रद्धा सद्गतिः सत्परायणा
॥ १५ ॥ सिंधुर्मंदाकिनी गंगा यमुना च

Sindhur-mandākini

सरस्वती ॥ गोदावरी विपाशा च कावेरी च शतह्रदा ॥ १६ ॥ सरयूश्चन्द्रभागा च कौशिकी गंडकी शुचिः ॥ नर्मदा कर्मनाशा च चर्मण्वत्यथ वेदिका ॥ १७ ॥ वेत्रवती वितस्ता च वरदा नरवाहना ॥ सती पति-व्रता साध्वी सुचक्षुःकुंडवासिनी ॥ १८ ॥ एकचक्षुः सहस्राक्षी सुश्रोणिर्भगमालि-

नी ॥ सेनाश्रोणिः पताका च सुव्यूहा युद्ध-
कांक्षिणी ॥ १९ ॥ पताकिनी दया रंभा
विपंची पंचमप्रिया ॥ परापरकला कांता
त्रिशक्तिर्मोक्षदायिनी॥२०॥ऐंद्री माहेश्व-
री ब्राह्मी कौमारी कूलवासिनी॥इच्छाभ-
गवती शक्तिः कामधेनुः कृपावती ॥ २१ ॥
वज्रयुधा वज्राहस्ता चंडी चण्डपराक्रमा॥

गौरी सुवर्णवर्णा च स्थितिसंहारकारिणी
॥ २२ ॥ एकानेका महेज्या च शतबाहु-
र्महाभुजा ॥ भुजंगभूषणा भूषा षट्चक्र-
क्रमवासिनी॥ २३ ॥ षट्चक्रभेदिनी श्या-
मा कायस्था कायवर्जिता ॥ सुस्मिता सु-
मुखी क्षामा मूलप्रकृतिरीश्वरी॥ २४॥ अ-
जा च बहुवर्णा च पुरुषार्थप्रवर्तिनी॥ रक्ता

नीला सिताश्यामा कृष्णा पीता च कर्बुरा
॥२५॥ क्षुधा तृष्णा जरा वृद्धा तरुणी क-
रुणालया॥ कला काष्ठा मुहूर्ता च निमि-
षा कालरूपिणी ॥ २६ ॥ सुवर्णरशना
नासा चक्षुःस्पर्शवती रसा॥ गंधप्रिया सु-
गंधा च सुस्पर्शा च मनोगतिः ॥ २७ ॥
मृगनाभिर्मृगाक्षी च कर्पूरामोदधारिणी॥

पद्मयोनिः सुकेशी च सुलिंगा भगरूपिणी ॥२८॥ योनिमुद्रा महामुद्रा खेचरी खगगामिनी ॥ मधुश्रीर्माधवी वल्ली मधुमत्ता मदोद्धता ॥ २९ ॥ मातंगी शुकहस्ता च पुष्पबाणेक्षुचापिनी ॥ रक्तांबरधरा क्षीबा रक्तपुष्पावतंसिनी ॥ ३० ॥ शुभ्रांबरधरा धीरा महाश्वेता वसुप्रिया ॥ सुवेणी प-

ब्जहस्ता च मुक्ताहारविभूषणा ॥ ३१ ॥
कर्पूरामोदनिःश्वासा पद्मिनी पद्ममंदिरा॥
खड्गिनी चक्रहस्ता च भुशुंडी परिघायुधा
॥ ३२ ॥ चापिनी पाशहस्ता च त्रिशूल-
वरधारिणी॥सुबाणा शक्तिहस्ता च मयूर-
वरवाहना ॥ ३३ ॥ वरायुधधरा वीरा
वीरपानमदोत्कटा ॥ वसुधा वसुधारा च

जया शाकंभरी शिवा ॥ ३४ ॥ विजया
च जयंती च सुस्तनी शत्रुनाशिनी ॥ अंत-
र्वत्नी वेदशक्तिर्वरदा वरधारिणी ॥ ३५ ॥
शीतला च सुशीला च बालग्रहविनाशि-
नी ॥ कौमारी च सुपर्वा च कामाख्या
कामवंदिता ॥ ३६ ॥ जालंधरधरानंता
कामरूपनिवासिनी ॥ कामबीजवती

सत्यासत्यधर्मपरायणा ॥ ३७॥ स्थूलमा-
र्गस्थिता सूक्ष्मा सूक्ष्मबुद्धिप्रबोधिनी ॥
षट्कोणा च त्रिकोणा त्रिनेत्रा त्रिपुरसुंदरी
॥ ३८॥ वृषाप्रिया वृषारूढा महिषासुरघा-
तिनी॥शुंभदर्पहरा दीप्ता दीप्तपावकसन्नि-
भा ॥ ३९॥ कपालभूषणा काली कपाल-
मालधारिणी ॥ कपालकुण्डला दीर्घा शि-

द्रुती घनध्वनिः ॥४०॥ सिद्धिदा बुद्धिदा
नित्या सत्यमार्गप्रबोधिनी ॥ कम्बुग्रीवा
वसुमती च्छत्रच्छायाकृतालया ॥ ४१॥
जगद्गर्भा कुण्डलिनी भुजगाकारशायि-
नी॥प्रोल्लसत्सप्तपद्मा च नाभिनालमृणा-
लिनी ॥ ४२ ॥ मूलाधारा निराकारा
वह्निकुण्डकृतालया ॥ वायुकुण्डसुखासी-

ना निराधारा निराश्रया ॥ ४३ ॥ श्वासो-
च्छ्वासगतिर्जीवग्राहिणी वह्निसंश्रया ॥
वल्लीतंतुसमुत्थाना षड्रसास्वादलोलुपा
॥ ४४ ॥ तपस्विनी तपःसिद्धिस्तपसा
सिद्धिदायिनी ॥ तपोनिष्ठा तपोयुक्ता ता-
पसी च तपःप्रिया ॥ ४५ ॥ सप्तधातुम-
यी मूर्तिः सप्तधात्वंतराश्रया ॥ देहपुष्टिर्म-

नः पुष्टिरन्नपुष्टिर्बलोद्धता ॥ ४६ ॥ ओष-
धिर्वैद्यमाता च द्रव्यशक्तिप्रभाविनी ॥
वैद्या वैद्यचिकित्सा च सुपथ्या रोगनाशि-
नी ॥ ४७ ॥ मृगया मृगमांसादा मृगत्वङ्-
मृगलोचना ॥ वागुरा बंधरूपा च बंधरू-
पा वधोद्धता ॥ ४८ ॥ बंदीबंदिस्तुताकारा-
गारबन्धविमोचिनी ॥ शृंखला खलहा

विद्या दृढबन्धाविमोचिनी ॥ ४९ ॥ अं-
बिका बालिका चांबा स्वक्षा साधुजना-
र्चिता ॥ कौलिकी कुलविद्या च सुकला
कुलपूजिता ॥ ५० ॥ कालचक्रभ्रमिभ्रां-
ता विभ्रामा भ्रमनाशिनी ॥ वात्याली मे-
घमाला च सुवृष्टिः सस्यवर्धिनी ॥ ५१ ॥
अकारा च इकारा च उकारैकाररूपिणी ॥

ह्रींकारी बीजरूपा च क्लींकारांबरवासि-
नी ॥ ५२ ॥ सर्वाक्षरमयी शक्तिरक्षरा व-
र्णमालिनी ॥ सिंदूरारुणवर्णा च सिंदूराति-
लकप्रिया ॥ ५३ ॥ वश्या च वश्यबीजा
च लोकवश्यविभाविनी ॥ नृपवश्या नृपैः
सेव्या नृपवश्यकरी प्रिया ॥ ५४ ॥ महि-
षा नृपमान्या च नृमान्या नृपनंदिनी ॥

नृपधर्ममयी धन्या धनधान्याविवर्धिनी ॥ ५५ ॥ चतुर्वर्णमयी मूर्तिश्चतुर्वर्णैश्च पूजिता ॥ सर्वधर्ममयी सिद्धिश्चतुराश्रमवासिनी ॥ ५६ ॥ ब्राह्मणी क्षत्रिया वैश्या शूद्रा चावरवर्णजा ॥ वेदमार्गरता यज्ञा वेदिविश्वविभाविनी ॥ ५७ ॥ अस्त्रशस्त्रमयी विद्या वरशस्त्रास्त्रधारिणी ॥ सुमेधा

सत्यमेधा च भद्रकाल्यपराजिता ॥५८॥ गायत्री सत्कृतिः संध्या सावित्री त्रिपदा-श्रया ॥ त्रिसंध्या त्रिपदी धात्री सुपर्वा सा-मगायनी ॥५९॥ पांचाली बालिका बा-ला बालक्रीडा सनातनी ॥ गर्भाधारधरा शून्या गर्भाशयनिवासिनी ॥ ६० ॥ सुरा-रिघातिनी कृत्या पूजना च तिलोत्तमा ॥

लज्जा रसवती नंदा भवानी पापनाशिनी
॥ ६१ ॥ पट्टांबरधरा गीतिः सुगीतिर्ज्ञान-
लोचना ॥ सप्तस्वरमयी तंत्री षड्जमध्यम-
धैवता ॥ ६२ ॥ मूर्च्छनाग्रामसंस्थाना मू-
र्च्छांसुस्थानवासिनी ॥ अट्टाट्टहासिनी प्रे-
ता प्रेतासननिवासिनी ॥ ६३ ॥ गीतनृ-
त्यप्रिया कामा तुष्टिदा पुष्टिदाक्षया ॥ नि-

ष्ठा सत्यप्रिया प्रज्ञा लोलाक्षी च सुरोत्तमा ॥ ६४ ॥ सविषा ज्वालिनी ज्वाला विश्व-मोहार्तिनाशिनी ॥ विषारिर्नागदमनी कु-रुकुल्यामृतोद्भवा ॥ ६५ ॥ भूतभीतिहरा रक्षा भूतावेशविनाशिनी ॥ रक्षोघ्नी राक्ष-सी रात्रिर्दीर्घनिद्रानिवारिणी ॥ ६६ ॥ चंद्रिका चंद्रकांतिश्च सूर्यकांतिर्निशा च-

री ॥ डाकिनी शाकिनी शिष्या हाकिनी
चक्रवाकिनी॥६७॥सिता सितप्रिया स्वं-
गा सकला वनदेवता ॥ गुरुरूपधरा गूर्वी
मृत्युमारी विशारदा ॥ ६८ ॥ महामारी
विनिद्रा चतंद्रा मृत्युविनाशिनी ॥ चंद्रमं-
डलसंकाशा चंद्रमंडलवासिनी॥६९॥अ-
णिमादिगुणोपेता सुस्पृहा कामरूपिणी॥

अष्टासिद्धिप्रदा प्रौढा दुष्टदानवघातिनी
॥७०॥ अनादिनिधना पुष्टिश्चतुर्बाहुश्च-
तुर्मुखी ॥ चतुःसमुद्रशयना चतुर्वर्गफल-
प्रदा ॥ ७१ ॥ काशपुष्पप्रतीकाशा शरत्कु-
मुदलोचना॥ भूता भव्या भविष्या च शैल-
जा शैलवासिनी॥७२॥ वाममार्गरता वा-
मा शिववामांगवासिनी ॥ वामाचारप्रि-

या तुष्टिर्लोपामुद्रा प्रबोधिनी ॥७३ ॥भू-
तात्मा परमात्मा च भूतभावविभाविनी ॥
मंगला च सुशीला च परमार्थप्रबोधिनी
॥७४ ॥ दक्षिणा दक्षिणामूर्तिः सुदीक्षा च
हरिप्रसूः ॥ योगिनी योगयुक्ता च योगां-
गा ध्यानशालिनी ॥७५ ॥ योगपट्टधरा
मुक्ता मुक्तानां परमागतिः॥ नारसिंही स-

जन्मा च त्रिवर्गफलदायिनी ॥ ७६ ॥ घ-
मदा धनदा चैका कामदा मोक्षदा द्युतिः ॥
साक्षिणी क्षणदा दक्षा मोक्षदा कोटिरूपि-
णी ॥ ७७ ॥ ऋतुः कात्यायिनी स्वच्छा सु-
च्छंदा च कविप्रिया ॥ सत्यागमा बहिस्था
च काव्यशक्तिः कवित्वदा ॥ ७८ ॥ मीनपु-
त्री सती माता मैनाकभगिनी तडित् ॥ सौ-

स०

२०

दामिनी सुदामा च सुधामा धामशालिनी
॥ ७९ ॥ सौभाग्यदायिनी द्यौश्च सुभ-
गा द्युतिवर्धिनी ॥ श्रीकृत्तिवसना चैव कं-
काली कलिनाशिनी ॥ ८० ॥ रक्तबीजव-
धोद्युक्ता सुतंतुर्बीजसंततिः ॥ जगज्जीवा
जगद्बीजा जगत्त्रयहितैषिणी ॥ ८१ ॥ चा-
मीकररुचिश्चांद्री साक्षाद्या षोडशी कला ॥

यत्तत्पदानुबन्धा च यक्षिणी धनदार्चिता ॥ ८२ ॥ चित्रिणी चित्रमाया च विचित्रा भुवनेश्वरी ॥ चामुंडा मुंडहस्ता च चंडमुंडवधोद्यता ॥ ८३ ॥ अष्टम्येकादशी पूर्णा नवमी च चतुर्दशी ॥ अमा कलशहस्ता च पूर्णकुंभपयोधरा ॥ ८४ ॥ अभीरुर्भैरवी भीरुर्भीमा त्रिपुरभैरवी ॥ महाचंडा च रौ-

द्री च महाभैरवपूजिता ॥८५॥ निर्मुंडा ह-
स्तिनी चंडा करालदशनानना ॥ कराल
विकराला च घोरा घुर्घुरनादिनी ॥ ८६ ॥
रक्तदंतोर्ध्वकेशी च बन्धूककुसुमारुणा॥
कादंबिनीपटा सा च काश्मीरी कुंकुमप्रि-
या॥८७॥क्षांतिर्बहुसुवर्णा च रतिर्बहुसुव-
र्णदा॥ मातंगिनी वरारोहा मत्तमातंगगा-

मिनी॥८८॥हंसा हंसगतिर्हंसी हंसोज्ज्व-
लशिरोरुहा॥ पूर्णचंद्रमुखी श्यामा स्मिता-
स्या श्यामकुण्डला॥८९॥मषी च लेखनी
लेखा सुलेखा लेखकप्रिया॥ शंखिनी शं-
खहस्ता च जलस्था जलदेवता॥९०॥
कुरुक्षेत्रावनिः काशी मथुरा कांच्यवंति-
का॥ अयोध्या द्वारिका माया तीर्थातीर्थ

स०

२२
२२

कराप्रिया ॥ ९१ ॥ त्रिपुष्करा प्रमेया च
कोशस्था कोशवासिनी ॥ कौशिकी तु
कुशावर्ता कौशाम्बी कोशवार्द्धिनी ॥ ९२॥
कोशदा पद्मकोशाक्षी कुसुंभकुसुमाप्रिया॥
तोतला च तुलाकोटिः कोटस्था कोटरा-
श्रया॥ ९३॥ स्वयंभूश्च सुरूपा च स्वरू-
पा पुण्यवार्धिनी॥ तेजस्विनी सुभिक्षा च

बलदा बलदायिनी ॥ १४ ॥ महाकोशी
महावार्ता बुद्धिः सदसदात्मिका ॥ महाग्र-
हहरा सौम्या विशोका शोकनाशिनी
॥ १५ ॥ सात्विकी सत्वसंस्था च राजसी
च रजोवृता ॥ तामसी च तमोयुक्ता गुण-
त्रयविभाविनी ॥ १६ ॥ अव्यक्ता व्यक्त-
रूपा च वेदविद्या च शांभवी ॥ शंकरा क-

लिपनी कल्पा मनःसंकल्पसंतातिः ॥ १७॥
सर्वलोकमयी शक्तिः सर्वश्रवणगोचरा ॥
सर्वज्ञानवती वांछा सर्वतत्त्वावबोधिका
॥ १८ ॥ जागृतिश्च सुषुप्तिश्च स्वप्नावस्था
तुरीयका ॥ सत्वरा मंदरा मंदा मदिरा-
मोदधारिणी ॥ १९ ॥ पानभूमिः पानपा-
त्रपानदानकरोद्यता ॥ अपूर्णारुणनेत्रा

च किंचिदव्यक्तभाषिणी ॥ १०० ॥ आ-
शापूरा च दीक्षा च दक्षा दीक्षितपूजिता ॥
नागवल्ली नागकन्या भोगिनी भोगवल्ल-
भा ॥ १ ॥ सर्वशास्त्रमयी विद्या सुस्मृतिर्ध-
र्मवादिनी ॥ श्रुतिस्मृतिधरा ज्येष्ठा श्रेष्ठा
पातालवासिनी ॥ २ ॥ मीमांसा तर्कवि-
द्या च सुभक्तिर्भक्तवत्सला ॥ सुनाभिया-

तना जातिर्गंभीरा भाववर्जिता ॥ ३॥ ना-
गपाशधरा मूर्तिरगाधा नागकुंडला ॥ सु-
चक्रा चक्रमध्यस्था चक्रकोणनिवासि-
नी ॥ ४ ॥ सर्वमंत्रमयी विद्या सर्वमंत्राक्ष-
रावलिः॥मधुस्रवा स्रवंती च भ्रामरी भ्र-
मरालका ॥ ५ ॥ मातृमंडलमध्यस्था मा-
तमंडलवासिनी ॥ कुमारजननी क्रूरा सु-

मुखीज्वरनाशिनी ॥ ६ ॥ अतीता विद्यमा-
ना च भाविनीप्रीतिमञ्जरी ॥ सर्वसौख्य-
वती युक्तिराहारपरिणामिनी ॥ ७ ॥ नि-
धाना पञ्चभूतानां भवसागरतारिणी ॥ अ-
क्रूरा च ग्रहवती विग्रहा ग्रहवर्जिता ॥ ८ ॥
रोहिणी भूमिगर्भा च कालभूः कालवर्ति-
नी ॥ कलंकराहिता नारी चतुःषष्ट्यभिधा-

स०

२८

वती ॥ ९ ॥ जीर्णा च जीर्णवस्त्रा च नूतना
नववल्लभा ॥ अरजा च रतिप्रीतिरातिराग-
विवर्धिनी ॥ ११० ॥ पंचवातगतिर्भिन्ना
पंचश्लेष्माशयाधरा ॥ पंचपित्तवती श-
क्तिः पंचस्थानविभाविनी ॥ ११ ॥ उद-
क्या च वृषस्यंती बहिःप्रस्रवणी ऽयहा ॥
रजःशुक्रधरा शक्तिर्जरायुर्गर्भधारिणी

॥ १२ ॥ त्रिकालज्ञा त्रिलिंगा त्रिमूर्तिस्त्रि-
पुरवासिनी ॥ अरागा शिवतत्वा च काम-
तत्वानुरागिणी ॥ १३ ॥ प्राच्यवाची प्र-
तीची दिगुदीची दिग्वि दिग्दिशा ॥ अहंकृ-
तिरहंकारा बालामाया बलिप्रिया ॥ १४ ॥
स्रुक्स्रुवा सामधेनी च सुश्रद्धा श्राद्धदेव-
ता ॥ माता मातामही तृप्तिः पितृमाता पि-

तामही ॥ १५ ॥ स्नुषा दौहित्रिणी पुत्री पौ-
त्रा नप्त्री शिशुप्रिया ॥ स्तनदा स्तनधारा
च विश्वयोनिः स्तनंधयी ॥ १६ ॥ शिशू-
त्संगधरा दोला दोलाक्रीडाभिनंदिनी ॥
उर्वशी कदलीकेकाविशिखा शिखिवार्ति-
नी ॥ १७ ॥ खट्वांगधारिणी खट्वा बाणपुं-
खानुवर्तिनी ॥ लक्ष्यप्राप्तिकरा लक्ष्याल-

क्ष्या च शुभलक्षणा ॥ १८ ॥ वर्तिनो सु-
पथाचारापरिखा च खनिर्वृतिः॥ प्राकार-
वलया वेला मर्यादा च महोदधौ ॥ १९ ॥
पोषिणी शोषिणी शक्तिर्दीर्घकेशी सुलो-
मशा ॥ ललितामांसला तन्वी वेदवेदांग-
धारिणी॥ १२० ॥ नरासृक्पानमत्ता च न-
रमुण्डास्थिभूषणा ॥ अक्षक्रीडारतिः सारी

सारिका शुकभाषिणी ॥२१॥ शाबरी गा-
रुडीविद्या वारुणी वरुणार्चिता ॥ वाराही
तुंडहस्ता च दंष्ट्रोद्धृतवसुंधरा ॥२२॥ मी-
नमूर्तिधरा मूर्ता वदान्याऽप्रतिमाश्रया ॥
अमूर्ता निधिरूपा च शालिग्रामाशिला
शुचिः ॥२३॥ स्मृतिःसंस्काररूपा च सु-
संस्कारा च संस्कृतिः ॥ प्राकृता देशभाषा

च गाथा गीतिः प्रहेलिका ॥ २४ ॥ इडा च
पिंगलापिंगा सुषुम्णा सूर्यवाहिनी ॥ शशि-
स्रवा च तालस्था काकिन्यमृतजीविनी
॥ २५ ॥ अणुरूपा बृहद्रूपा लघुरूपा गुरुः
स्थिरा ॥ स्थावरा जंगमा देवी कृतकर्मफ-
लप्रदा ॥ २६ ॥ विषयाक्रांतदेहा च निर्विशे-
षा जितेंद्रिया ॥ विश्वरूपा चिदानंदा पर-

ब्रह्मप्रबोधिनी ॥२७॥ निर्विकारा च निर्वै-
रा विरतिःसत्यवर्धिनी ॥पुरुषाज्ञा च भि-
न्ना च क्षांतिः कैवल्यदायिनी ॥२८॥ वि-
विक्तसेविनी प्रज्ञा जनयित्री बहुश्रुतिः ॥
निरीहा च समस्तैका सर्वलोकैकसेविता
॥२९॥ सेवा सेवाप्रिया सेव्या सेवाफल-
विवर्धिनी ॥ कलौ कल्किप्रिया काली दु-

ष्टम्लेच्छविनाशिनी ॥ १३० ॥ प्रत्यंचा च
धनुर्यष्टिःखड्गधारा दुरानतिः ॥ अश्वप्लु-
तिश्च वल्गा च सृणिः सन्मृत्युवारणा
॥ ३१ ॥ वीरभूर्वीरमाता च वीरसूर्वीरनं-
दिनी ॥ जयश्रीर्जयदीक्षा च जयदा जय-
वर्धिनी ॥ ३२ ॥ सौभाग्यसुभगाकारा
सर्वसौभाग्यवर्धिनी ॥ क्षेमंकरी सिद्धिरू-

पा सत्कीर्तिः पथिदेवता ॥ ३३ ॥ सर्वती-
र्थमयी मूर्तिः सर्वदेवमयी प्रभा ॥ सर्वसि-
द्धिप्रदा शक्तिः सर्वमंगलमंगला ॥ ३४ ॥
पुण्यं सहस्रनामेदं शिवायाः शिवभाषित-
म् ॥ यः पठेत्प्रातरुत्थाय शुचिर्भूत्वा समा-
हितः ॥ ३५ ॥ यश्चापि शृणुयान्नित्यं नरो
निश्चलमानसः ॥ एककालं द्विकालं वात्रि-

कालं श्रद्धयान्वितः॥ ३६ ॥सर्वदुःखवि-
निर्मुक्तो धनधान्यसमान्वितः ॥ तेजस्वी
बलवाञ्छूरः शोकरोगविवर्जितः ॥ ३७॥
यशस्वी कीर्तिमान् धन्यः सुभगो लोकपू-
जितः ॥ रूपवान् गुणसंपन्नः प्रभावीर्य-
समन्वितः॥ ३८ ॥ श्रेयांसि लभते नित्यं
निश्चलां च शुभां श्रियम् ॥ सर्वपापवि-

स० ३०

निर्मुक्तो लोभक्रोधविवर्जितः ॥ ३९ ॥
नित्यं बंधुसुतैर्दारैः पुत्रपौत्रैर्महोत्सवैः ॥ नं-
दितः सेवितो भृत्यैर्बहुभिः शुचिमानसैः
॥ १४० ॥ विद्यानां पारगो विप्रः क्षत्रियो
विजयी रणे ॥ वैश्यस्तु धनलाभाढ्यः शूद्रः
सुखमवाप्नुयात् ॥ ४१ ॥ पुत्रार्थी लभते पुत्रं
धनार्थी विपुलं धनम् ॥ इच्छाकामं तु का-

माथीं धर्मार्थी धर्ममक्षयम् ॥ ४२ ॥ क-
न्यार्थी लभते कन्यां रूपशीलगुणान्वि-
ताम् ॥ क्षेत्रं च बहुसस्यं स्याद्गावस्तु बहुदु-
ग्धदाः ॥ ४३ ॥ नाशुभं नापदस्तस्य नभयं
नृपशत्रुतः ॥ जायते नाशुभाद्बुद्धिर्लभते
कुलधुर्यताम् ॥ ४४ ॥ न बाधंते ग्रहास्त-
स्य न रक्षांसि नपन्नगाः ॥ न पिशाचा न

स० ८६

डाकिन्यो भूतव्यंतरजंबुकाः ॥४५॥ बाल-
ग्रहाभिभूतानां बालानां शांतिकारकम् ॥
द्वंद्वानां प्रीतिभेदे च मैत्रीकरणमुत्तमम्
॥४६॥ लोहपाशैर्दृढैर्बद्धो बद्धो वेश्मनि
दुर्गमे ॥ तिष्ठन् शृण्वन् पठन्मर्त्यो मुच्यते
नात्र संशयः ॥४७॥ न दाराणां न पुत्राणां
न बंधूनां न मित्रजम् ॥ पश्यंति ते न शोकं

हि वियोगं चिरजीविताम् ॥ ४८ ॥ अंध-
स्तु लभते दृष्टिं चक्षुरोगैर्न बाधते ॥ बधिरः
श्रुतिमाप्नोति मूको वाचं शुभां नरः ॥ ४९ ॥
पतद्गर्भा च या नारी स्थिरगर्भा प्रजायते ॥
स्राविणी बद्धगर्भा च सुखमेव प्रसूयते
॥ १५० ॥ कुष्ठिनः शीर्णदेहा ये गतकेशन-
खत्वचः ॥ पठनाच्छ्रवणाद्वापि दिव्यका-

या भवंति ते ॥ ५१ ॥ ये पठंति सदा मर्त्याः शुचिष्मंतो जितेंद्रियाः ॥ अपुत्राः प्राप्नुयुः पुत्राञ्छ्रूणवंतोऽपि न संशयः ॥ ५२ ॥ महाव्याधिपरिग्रस्तास्तप्ता ये विविधै-र्ज्वरैः ॥ भूताभिषंगसंघातैश्चातुर्थिकतृती-यकैः ॥ ५३ ॥ अन्यैश्च दारुणै रोगैः पीड्यमानाश्च मानवाः ॥ गतबाधाः

प्रजायंते तैर्मुक्ता नात्र संशयः ॥ ५४ ॥
श्रुतिग्रंथधरो बालो दिव्यवादी कवी-
श्वरः ॥ पठनाच्छ्रवणाद्वापि भवत्येव न
संशयः॥ ५५ ॥ अष्टम्यां वा चतुर्दश्यां
नवम्यां चैकचेतसः ॥ ये पठंति सदा
मर्त्या न ते वै दुःखभाजनाः ॥ ५६ ॥
नवरात्रं जिताहारो दृढभक्तिर्जितेंद्रियः ॥

चण्डिकायतने विद्वान् शुचिष्मान्मूर्तिस-

न्निधौ ॥५७॥ एकाकी तु शतावृत्त्या पठ-

न्धीरश्च निर्भयः ॥ साक्षाद्भगवती तस्मै

प्रयच्छेदीप्सितं फलम् ॥ ५८ ॥ सिद्ध-

पीठे गिरौ रम्ये सिद्धक्षेत्रे सुरालये ॥

पठनात्साधकस्याशु सिद्धिर्भवति वांछि-

ता ॥ ५९ ॥ दशावर्तं पठेद्यस्तु भूमि-

शायी नरः शुचिः ॥ स्वप्ने मूर्तिमयीं देवीं वरदां सोऽपि पश्यति ॥ १६० ॥ कवित्वं संस्कृते तेषां शास्त्राणां व्याकृतौ सुतः ॥ शक्तिः प्रोन्मील्यते शास्त्रेष्वन-धीतेषु भारती ॥ ६१ ॥ आवर्तनसह-स्रैर्यै पठन्ति पुरुषोत्तमाः ॥ ते सिद्धाः सिद्धिदा लोके शापानुग्रहणे क्षमाः ॥ ६२ ॥

नखरागशिरोरत्नद्विगुणीकृतरोचिषः ॥
प्रयच्छंतश्च सर्वस्वं सेवंते तान्महीश्वराः ॥ ६३ ॥ रोचनालिखितं भूर्जे
कुंकुमेन शुभे दिने ॥ धारयेद्यंत्रितं देहे
पूजयित्वा कुमारिकाम् ॥ ६४ ॥ विप्रांऽश्च
वरनारींश्च धूपैः कुसुमचंदनैः ॥ क्षीर-
खंडाज्यभोज्यैश्च पूजयित्वा सुभूषिताः

॥ ६५ ॥ बध्नंति ये महारक्षां बालानां च विशेषतः ॥ भवंति नृपपूज्यास्ते कीर्तिभाजो यशस्विनः ॥ ६६ ॥ शत्रुतो न भयं तेषां दुर्जनेभ्यो न राजतः ॥ न च दाराभिचारेभ्यो न दारिद्र्यं स पश्य-ति ॥ ६७॥ महार्णवे महानद्यां स्थितेऽपि च न भीः क्वचित् ॥ रणे द्यूते विवादे च

विजयं प्राप्नुवंति ते ॥ ६८॥ नृपाश्च वश्य-
तां यांति नृपमान्याश्च ये नराः ॥ सर्वत्र
पूजिता लोके बहुमानपुरःसराः ॥ ६९ ॥
रतिरागविवृद्धाश्च विह्वलाः कामपीडि-
ताः ॥ यौवनाक्रांतदेहास्ताः श्रूयंते वा-
मलोचनाः ॥ १७० ॥ लिखितं मूर्ध्नि
कंठे वा धारयेद्यो रणे शुचिः ॥ शतधा

युध्यमानं तं प्रति योद्धा न पश्यति ॥ ७१ ॥ केतौ वा दुंदुभौ येषां तिष्ठते लिखितं रणे ॥ मायासैन्यपरिग्रस्तां कांदिशीकान् हतौजसः ॥ ७२ ॥ विचेतनान्विमूढांश्च शत्रुकृत्परिवर्जितान् ॥ निर्जित्य शत्रुसंघातांल्लभते विजयं ध्रुवम् ॥ ७३ ॥ नाभिचारो न शापश्च बाणवीरा-

दिकीलनम् ॥ डाकिनी पूतना कृत्या
महामारी च शाकिनी॥७४॥ भूताः प्रेताः
पिशाचाश्च रक्षांसि व्यंतरादयः॥ न वसं-
ति गृहे देहे लिखितं यत्र तिष्ठति॥७५॥
न शस्त्रानलतोयौघाद्भयं तस्योपजायते॥
दुर्वृत्तानां च पापानां बलहानिकरं
परम्॥ ७६ ॥ मंदुराकरिशालासु गवां

गोष्ठे समाहितः॥ पठेत्तद्दोषशान्त्यर्थं कूटं कपटनाशिनी॥७७॥ यमदूतान्न पश्यंति न ते निरययातनाम्॥ प्राप्नुवंति क्षयं प्रांते शिवलोकं सनातनम्॥७८॥ सर्वबाधासु घोरासु सर्वदुःखनिवारणम्॥ सुमंगलकरं स्वर्ग्यं पठितव्यं समाहितैः॥७९॥ श्रोतव्यं च सदा भक्त्या परं स्व-

स्तययनं महत् ॥ पुण्यं सहस्रनामेदमंबाया
रुद्रभाषितम् ॥ १८० ॥ चतुर्वर्गप्रदं सत्यं
नंदिकेन प्रकाशितम् ॥ नातःपरतरो मंत्रो
नातः परतरः स्तवः ॥ ८१ ॥ नातः परतरा
विद्या तीर्थं नातः परात्परम् ॥ ते धन्यकृ-
तपुण्यास्ते त एव भुवि पूजिताः ॥ ८२ ॥
एकवारं मुदा नित्यं येऽर्चयंति महेश्वरीम् ।

देवतानां देवता या ब्रह्माद्यैर्या च पूजिता ॥ ८३ ॥ भूयात्सा वरदा लोके साधूनां विश्वमंगला ॥ एतामेव पुराराध्यां विद्यां त्रिपुरभैरवीम् ॥ त्रैलोक्यमोहिनीरूपम-कार्षीद्भगवान् हरिः ॥ १८४ ॥

इति श्रीरुद्रयामळे तंत्रे नांदिकेश्वरसंवादे महाप्रभावो भवानीनामसहस्रः स्तवराजः संपूर्णः ।

ॐ श्रीगणेशाय नमः ॥ ॐ अस्य श्रीइंद्राक्षीस्तोत्रमंत्रस्य ॥ पुरंदरऋषिः ॥ अनुष्टुप्छंदः ॥ इंद्राक्षीदेवता ॥ ह्रीं बीजम् ॥ क्लीं कीलकम् ॥ सकलकामनासिद्ध्यर्थे पाठे विनियोगः ॥ अथ ध्यानम् ॥ इंद्राक्षीं द्विभुजां देवीं पीतवस्त्रधरां शुभाम् ॥ वामे हस्ते वज्रधरां दक्षिणे चाभय-

प्रदाम्॥१॥ सहस्रनेत्रां सूर्याभां नानालं-
कारभूषिताम्॥ प्रसन्नवदनां नित्यमप्स-
रोगणसेविताम् ॥२॥ श्रीदुर्गासौम्यवद-
ना पाशांकुशधरां पराम् ॥ त्रैलोक्यमो-
हिनीं देवीं भवानीं प्रणमाम्यहम्॥ ३ ॥
इति ध्यानम् ॥ ॐ ह्रीं श्रीं इंद्राक्षीं श्रीं पें
स्वाहा ॥इंद्र उवाच॥इंद्राक्षी नाम सा देवी

दैवतैः समुदाहृता ॥ गौरी शाकंभरी देवी

दुर्गानाम्नातिविश्रुता ॥ १ ॥ कात्यायनी

महादेवी चंद्रघंटा महातपाः ॥ गायत्री सा

च सावित्री ब्रह्माणी ब्रह्मवादिनी ॥ २ ॥

नारायणी भद्रकाली रुद्राणी कृष्णपिंग-

ला ॥ अग्निज्वाला रौद्रमुखी कालरात्रि-

स्तपस्विनी ॥ ३ ॥ मेघश्यामा सहस्राक्षी

विष्णुमाया जलोदरी ॥ महोदरी मुक्त-
केशी घोररूपा महाबला ॥ ४ ॥ आनंदा
भद्रजा नंदा रोगहंत्री शिवप्रिया ॥ शिव-
दूती कराली च प्रत्यक्षा परमेश्वरी ॥ ५ ॥
इंद्राणी चंद्ररूपा च इंद्रशक्तिपरायणा ॥
महिषासुरसंहर्त्री चामुंडा गर्भदेवता ॥ ६ ॥
वाराही नारसिंही च भीमा भैरवना-

दिनी ॥ श्रुतिः स्मृतिर्धृतिर्मेधा विद्या
लक्ष्मीः सरस्वती ॥ ७ ॥ आनंदा विजया
पूर्णा मानस्तोकापराजिता ॥ भवानी
पार्वती दुर्गा हैमवत्यंबिका शिवा ॥ ८ ॥
शिवा भवानी रुद्राणी शंकरार्धशरी-
रिणी ॥ एतैर्नामपदैर्दिव्यैः स्तुता शक्रेण
धीमता ॥ ९ ॥ आयुरारोग्यमैश्वर्यं सुख-

संपत्तिकारकम् ॥ क्षयापस्मारकुष्ठादि-
तापज्वरनिवारणम् ॥ १० ॥ शतमाव-
र्तयेद्यस्तु मुच्यते व्याधिबंधनात् ॥ आव-
र्तयेत्सहस्रेण लभते वांछितं फलम्
॥ ११ ॥ राज्यवश्यमवाप्नोति सर्वमेव
न संशयः ॥ लक्षमेकं जपेद्यस्तु साक्षाद्देवी
भविष्यति ॥ १२ ॥ त्रिकालं पठते नित्यं

धनधान्यं च संपदः ॥ अर्धरात्रे पठन्नित्यं
मुच्यते पापबंधनात् ॥ १३ ॥ इदं स्तोत्र-
मिदं पुण्यं जपे तु फलमाप्नुयात् ॥ विना-
शयति रोगाणामपमृत्युं हरत्युत ॥ १४ ॥
राज्यार्थी लभते राज्यं धनार्थी विपुलं
धनम् ॥ इच्छाकामं तु कामार्थी धर्मार्थी
धर्ममक्षयम् ॥ १५ ॥ विद्यार्थी लभते

त्रियां मोक्षार्थी परमं पदम् ॥ इंद्रेण क-
थितं स्तोत्रं सत्यं सत्यं न संशयः ॥ १६ ॥

इति श्रीइन्द्राक्षीस्तोत्रं सम्पूर्णम् ॥ ॥*॥

इदं पुस्तकं कल्याणनगर्यां श्रीकृष्णदासात्मज-गंगाविष्णोः
अध्यक्ष "लक्ष्मीवेंकटेश्वर" मुद्रणागारे पं० शिवदुलारे
वाजपेयीत्यनेन स्वाम्यर्थं मुद्रयित्वा प्रकाशितम् ।
शकाब्दाः १८४३, संवत १९७८ ।

पुस्तक मिलनेका ठिकाना–गंगाविष्णु श्रीकृष्णदास,
"लक्ष्मीवेंकटेश्वर" छापखाना, कल्याण–मुंबई.

* अथ *

# आदित्यहृदयम्

सूर्यसहस्रनामस्तोत्रं च ।

द्विषां मोक्षार्थी परमं पदम् ॥ इंद्रेण क-
थितं स्तोत्रं सत्यं सत्यं न संशयः ॥ १६ ॥

इति श्रीइन्द्राक्षीस्तोत्रं सम्पूर्णम् ॥ ॥*॥

इदं पुस्तकं कल्याणनगर्यां श्रीकृष्णदासात्मज-गंगाविष्णोः
अध्यक्ष 'लक्ष्मीवेंकटेश्वर' मुद्रणागारे पं० शिवदुलारे
वाजपेयीत्यनेन स्वाम्यर्थं मुद्रयित्वा प्रकाशितम् ।
शकाब्दाः १८४३, संवत् १९७८ ।

पुस्तक मिलनेका ठिकाना—गंगाविष्णु श्रीकृष्णदास,
"लक्ष्मीवेंकटेश्वर" छापखाना, कल्याण—मुंबई.

* अथ *

# आदित्यहृदयम्

सूर्यसहस्रनामस्तोत्रं च ।

* श्रीगणेशाय नमः *

अथ

# आदित्यहृदयम्

श्रीभास्कराय नमः ॥ शतानीक उवाच ॥ कथमादित्यमुद्यन्तमुपतिष्ठेद्द्वि-जोत्तम । एतन्मे ब्रूहि विप्रेन्द्र प्रपद्ये शरणं

तव ॥ १ ॥ सुमन्तुरुवाच ॥ इदमेव पुरा पृष्टः शङ्खचक्रगदाधरः । प्रणम्य शिरसा देवमर्जुनेन महात्मना ॥ २ ॥ कुरुक्षेत्रे महाराज निवृत्ते भारते रणे । कृष्णनाथं समासाद्य प्रार्थयित्वाऽब्रवीदिदम् ॥ ३ ॥ अर्जुन उवाच ॥ ज्ञानं च धर्मशास्त्राणां गुह्याद्गुह्यतरं तथा । मया कृष्ण परिज्ञातं

वाङ्मयं सचराचरम् ॥ ४ ॥ सूर्यस्तुतिमयं न्यासं वक्तुमर्हसि माधव । भक्त्या पृच्छामि देवेश कथयस्व प्रसादतः ॥ ५ ॥ सूर्यभक्तिं करिष्यामि कथं सूर्यं प्रपूजयेत् । तदहं श्रोतुमिच्छामि त्वत्प्रसादेन यादव ॥ ६ ॥ श्रीभगवानुवाच ॥ रुद्रादिदैवतैः सर्वैः पृष्टेन कथितं मया । वक्ष्येऽहं सूर्य-

विन्यासं शृणु पाण्डव यत्नतः ॥ ७ ॥
अस्माकं यत्त्वया पृष्टमेकचित्तो भवार्जुन ।
तदहं संप्रवक्ष्यामि ह्यादिमध्यावसानकम्
॥ ८ ॥ अर्जुन उवाच ॥ नारायण सुरश्रेष्ठ
पृच्छामि त्वां महायशाः । कथमादित्य-
मुद्यन्तमुपतिष्ठेत्सनातनम् ॥ ९ ॥ श्रीभग-
वानुवाच ॥ साधु पार्थ महाबाहो बुद्धिमानसि

पाण्डव । यन्मां पृच्छस्युपस्थानं तत्पवित्रं
विभावसोः ॥ १० ॥ सर्वमङ्गलमाङ्गल्यं
सर्वपापप्रणाशनम् । सर्वरोगप्रशमनमायु-
र्वर्द्धनमुत्तमम् ॥ ११ ॥ अमित्रदमनं पार्थ
संग्रामे जयवर्द्धनम् । वर्द्धनं धनपुत्राणा-
मादित्यहृदयं शृणु ॥ १२ ॥ यच्छ्रुत्वा
सर्वपापेभ्यो मुच्यते नात्र संशयः । त्रिषु

लोकेषु विख्यातं निःश्रेयसकरं परम् ॥ १३ ॥
देवदेवं नमस्कृत्य प्रातरुत्थाय चार्जुन ।
विघ्नान्यनेकरूपाणि नश्यन्ति स्मरणादपि
॥ १४ ॥ तस्मात्सर्वप्रयत्नेन सूर्यमाराधयेत्
सदा । आदित्यहृदयं नित्यं जाप्यं तच्छृणु
पाण्डव ॥ १५ ॥ यज्जपान्मुच्यते जन्तुर्दारि-
द्र्यादाशु दुस्तरात् । लभते च महासिद्धिं

कुष्ठव्याधिविनाशिनीम् ॥ १६ ॥ अस्मिन् मन्त्रे ऋषिश्छन्दो देवता शक्तिरेव च । सर्वमेव महाबाहो कथयामि तवाग्रतः ॥ १७ ॥ मया ते गोपितं न्यासं सर्वशास्त्रप्रबोधितम्, अथ ते कथयिष्यामि उत्तमं मन्त्रमेव च ॥ १८ ॥ ॐ अस्य श्रीआदित्यहृदयस्तोत्रमन्त्रस्य श्रीकृष्ण ऋषिः,

श्रीसूर्य्यात्मा त्रिभुवनेश्वरो देवता, अनु-
ष्टुप् छन्दः, हरितहयरथं दिवाकरं घृणि-
रिति बीजम्। ॐ नमो भगवते जित-
वैश्वानरजातवेदसे इति शक्तिः, ॐ नमो
भगवते आदित्याय नम इति कीलकम्,
ॐ अग्निगर्भदेवता इत्यस्त्रम्, ॐ नमो
भगवते तुभ्यमादित्याय नमो नमः इति

मन्त्रः । श्रीसूर्यनारायणप्रीत्यर्थे जपे विनि-
योगः ॥ अथ न्यासः ॥ ॐ ह्रां अङ्गुष्ठाभ्यां
नमः, ॐ ह्रीं तर्जनीभ्यां नमः, ॐ ह्रूं
मध्यमाभ्यां नमः, ॐ ह्रैं अनामिकाभ्यां
नमः, ॐ ह्रौं कनिष्ठिकाभ्यां नमः, ॐ ह्रः
करतलकरपृष्ठाभ्यां नमः, ॐ ह्रां हृदयाय नमः,
ॐ ह्रीं शिरसे स्वाहा, ॐ ह्रूं शिखायै वषट्,

ॐ हैं कवचाय हुम्, ॐ हौं नेत्रत्रयाय वौषट्, ॐ हः अस्त्राय फट्; ॐ हांह्रींहूंहैंहौंहः इति दिग्बन्धः ॥ अथ ध्यानम्-भास्वद्रत्नाढ्यमौलिः स्फुरदधररुचा रञ्जितश्चारुकेशो भास्वान्यो दिव्यतेजाः करकमलयुतः स्वर्णवर्णः प्रभाभिः । विश्वाकाशावकाशग्रहपतिशिखरे भाति यश्चोदयाद्रौ सर्वानन्दप्रदाता हरि-

हृरनमितः पातु मां विश्वचक्षुः ॥ १ ॥
पूर्वमष्टदलं पद्मं प्रणवादिप्रतिष्ठितम् ।
मायाबीजं दलाष्टाग्रे यन्त्रमुद्धारयेदिति ॥२॥
आदित्यं भास्करं भानुं रविं सूर्यं दिवाकरम् ।
मार्तण्डं तपनं चेति दलेष्वष्टसु योजयेत् ॥ ३॥
दीप्ता सूक्ष्मा जया भद्रा विभूतिर्विमला
तथा । अमोघा विद्युता चेति मध्ये श्रीः सर्वतो-

मुखी ॥ ४ ॥ सर्वज्ञं सर्वगंचैव सर्वकारणदैवतम् ।
सर्वेशं सर्वहृदयं नमामि सर्वसाक्षिणम
॥ ५ ॥ सर्वात्मा सर्वकर्ता च सृष्टिजीवनपा-
लकः । हितः स्वर्गापवर्गश्च भास्करेश !
नमोऽस्तु ते ॥ ६ ॥ इति प्रार्थना ॥ नमो
नमस्तेऽस्तु सदा विभावसो सर्वात्मने सप्त-
हयाय भानवे । अनन्तशक्तिर्मणिभूषणे-

न ददस्व भुक्तिं मम मुक्तिमव्ययाम्
॥ ७ ॥ अर्कं तु मूर्ध्नि विन्यस्य ललाटे
तु रविं न्यसेत् । विन्यसेन्नेत्रयोः सूर्यं
कर्णयोश्च दिवाकरम् ॥ ८ ॥ नासिकायां
न्यसेद्भानुं मुखे वै भास्करं न्यसेत् । पर्ज-
न्यमोष्ठयोश्चैव तीक्ष्णं जिह्वान्तरे न्यसेत्
॥ ९ ॥ सुवर्णरेतसं कण्ठे स्कन्धयोस्ति-

ग्मतेजसम् । बाह्वोस्तु पूषणं चैव मित्रं वै पृष्ठतो न्यसेत् ॥ १० ॥ वरुणं दक्षिणे हस्ते त्वष्टारं वामतः करे । हस्ताबुष्णाकरः पातु हृदयं पातु भानुमान् ॥ ११ ॥ उदरे तु यमं विद्यादादित्यं नाभिमण्डले । कट्यां तु विन्यसेद्धंसं रुद्रमूर्वोस्तु विन्यसेत् ॥ १२ ॥ जान्वोस्तु गोपतिं न्यस्य सवितारं

तु जङ्घयोः । पादयोश्च विवस्वन्तं गुल्फयो-
श्च दिवाकरम् ॥ १३ ॥ बाह्यतस्तु तमो-
ध्वंसं भगमभ्यन्तरे न्यसेत्। सर्वाङ्गेषु सहस्रां-
शुं दिग्विदिक्षु भगं न्यसेत् ॥ १४ ॥ इति
दिग्बन्धः । एष आदित्यविन्यासो देवा-
नामपि दुर्लभः । इमं भक्त्या न्यसेत्पार्थ
स याति परमां गतिम् ॥ १५ ॥ कामक्रोध-

संशयः । सर्पादपि
कृतात्पापान्मुच्यते नात्र संशयः । सर्पादपि
भयं नैव संग्रामेषु पथिष्वपि ॥ १६ ॥ रिपु-
संघट्टकालेषु तथा चौरसमागमे । त्रिसन्ध्यं
जपतो न्यासं महापातकनाशनम् ॥ १७ ॥
विस्फोटकसमुत्पन्नं तीव्रज्वरसमुद्भवम् । शि-
रोरोगं नेत्ररोगं सर्वव्याधिविनाशनम् ॥ १८ ॥
कुष्ठव्याधिस्तथा दद्रुरोगाश्च विविधाश्च ये ।

जपमानस्य नश्यन्ति शृणु भक्त्या तदर्जुन
॥ १९ ॥ आदित्यो मन्त्रसंयुक्त आदित्यो
भुवनेश्वरः । आदित्यान्नापरो देवो ह्यादि-
त्यः परमेश्वरः ॥ २० ॥ आदित्यमर्चयेद्
ब्रह्मा शिव आदित्यमर्चयेत् । यदादित्यम-
यं तेजो मम तेजस्तदर्जुन ॥ २१ ॥ आदित्यं
मन्त्रसंयुक्तमादित्यं भुवनेश्वरम् । आदित्यं

यं प्रपश्यन्ति मां पश्यन्ति न संशयः ॥ ॥ २२ ॥ त्रिसन्ध्यमर्चयेत्सूर्यं स्मरेद्भक्त्या तु यो नरः। न स पश्यति दारिद्र्यं जन्मजन्मनि चार्जुन ॥ २३ ॥ एतत्ते कथितं पार्थ आदित्यहृदयं मया । शृण्वन्मुक्तश्च पापेभ्यः सूर्यलोके महीयते ॥ २४ ॥ नमो भगवते तुभ्यमादित्याय नमो नमः। आदित्यः सविता

सूर्यः खगः पूषा गभस्तिमान् ॥ २५ ॥ सुवर्णः स्फटिको भानुः स्फुरितो विश्वतापनः । रविर्विश्वो महातेजाः सुवर्णः सुप्रबोधकः ॥ ॥ २६ ॥ हिरण्यगर्भस्त्रिशिरास्तपनो भास्करो रविः । मार्त्तण्डो गोपतिः श्रीमान्कृतज्ञश्च प्रतापवान् ॥ २७ ॥ तस्मिस्त्रहा भगो हंसो नासत्यश्च तमोनुदः । शुद्धो विरोचनः केशी सह-

स्रांशुर्महाप्रभुः ॥ २८ ॥ विवस्वान्पूषणो मृ-
त्युर्मिहिरो जामदग्न्याजित् । घर्मरश्मिः पत-
ङ्गश्च शरण्योऽमित्रहा तपः ॥ २९ ॥ दुर्विज्ञेय-
गतिः शूरस्तेजोराशिर्महा यशाः । शम्भुश्चि-
त्राङ्गदः सौम्यो हव्यकव्यप्रदायकः ॥ ३० ॥
अंशुमानुत्तमो देव ऋग्यजुः साम एव च ।
हरिदश्वस्तमोदारः सप्तसप्तिर्मरीचिमान् ॥

॥ ३१ ॥ अग्निगर्भोऽदितेः पुत्रः शम्भुस्तिमिर-
नाशनः । पूषा विश्वम्भरो मित्रः सुवर्णः सुप्र-
तापवान् ॥ ३२ ॥ आपती मण्डली भास्वाँ-
स्तपनः सर्वतापनः । कृताविस्वो महातेजाः सर्व-
रत्नमयोद्भवः ॥ ३३ ॥ अक्षरश्च क्षरश्चैव
प्रभाकरविभाकरौ । चन्द्रचन्द्राङ्गदः सौम्यो
हव्यकव्यप्रदायकः ॥ ३४ ॥ अंगारकोऽङ्गदो-

ऽगस्ती रक्ताङ्गश्चाङ्गवर्धनः । बुधो बुद्धासनो बुद्धिर्बुद्धात्मा बुद्धिवर्द्धनः ॥ ३५॥ बृहद्भानुर्बृहद्भासी बृहद्धामा बृहस्पतिः । शुक्लस्त्वं शुक्लरेतास्त्वं शुक्लाङ्गः शुक्लभूषणः ॥३६॥ शनिमान् शनिरूपस्त्वं शनैर्गच्छसि सर्वदा । अनादिरादिरादित्यस्तेजोराशिमहातपाः ॥ ॥३७॥ अनादिरादिरूपस्त्वमादित्यो दिक्प-

तिर्यमः । भानुमान् भानुरूपस्त्वं स्वर्भानुर्भानुर्दीप्तिमान् ॥ ३८ ॥ धूमकेतुर्महाकेतुः सर्वकेतुरनुत्तमः । तिमिरावरणः शम्भुः स्त्रष्टा मार्तण्ड एव च ॥३९॥ नमः पूर्वाय गिरये पश्चिमाय नमोनमः । नमो नमः सहस्रांशो ह्यादित्याय नमो नमः । नमः पद्मप्रबोधाय नमस्ते द्वादशात्मने ।।४१।। नमो विश्वप्रबोधाय नमो

भ्राजिष्णुजिष्णवे । ज्योतिषे च नमस्तुभ्यं ज्ञानाकार्यं नमो नमः ॥ ४२ ॥ प्रदीप्ताय प्रगल्भाय युगान्ताय नमो नमः । नमस्ते होतृपतये पृथिवीपतये नमः ॥ ४३ ॥ नमोंकार वषट्कार सर्वयज्ञ नमोऽस्तु ते। ऋग्वेदादियजुर्वेद सामवेद नमोऽस्तु ते ॥४४॥ नमो हाटकवर्णाय भास्करा नमो नमः । जयाय ज-

यभद्राय हरिदश्वाय ते नमः॥ ४५ ॥ दिव्या-
य दिव्यरूपाय ग्रहाणां पतये नमः। नमस्ते
शुचये नित्यं नमः कुरुकुलात्मने ॥ ४६ ॥
नमस्त्रैलोक्यनाथाय भूतानां पतये नमः।
नमः कैवल्यनाथाय नमस्ते दिव्यचक्षुषे ॥
॥ ४७ ॥ त्वं ज्योतिस्त्वं द्युतिर्ब्रह्मा त्वं विष्णु-
स्त्वं प्रजापतिः। त्वमेव रुद्रो रुद्रात्मा वायुर-

ग्निस्त्वमेव च ॥ ४८ ॥ योजनानां सहस्रे द्वे शते द्वे द्वे च योजने । एकेन निमिषार्द्धेन क्रममाण नमोऽस्तु ते ॥ ४९ ॥ नवयोजनलक्षाणि सहस्रद्विशतानि च । यावद्वटीप्रमाणेन क्रममाण नमोऽस्तु ते ॥५०॥ अग्रतश्च नमस्तुभ्यं पृष्ठतश्च सदा नमः । पार्श्वतश्च नमस्तुभ्यं नमस्ते चास्तु सर्वदा ॥ ५१ ॥ नमः

सुरारिहन्त्रे च सोमसूर्याग्निचक्षुषे । नमो दिव्याय व्योमाय सर्वतन्त्रमयाय च ॥५२॥
नमो वेदान्तवेद्याय सर्वकर्मादिसाक्षिणे । नमो हरितवर्णाय सुवर्णाय नमो नमः ॥५३॥
अरुणो माघमासे तु सूर्यो वै फाल्गुने तथा । चैत्रमासे तु वेदाङ्गो भानुर्वैशाखतापनः ॥५४॥
ज्येष्ठमासे तपेदिन्द्र आषाढे तपते रविः ।

गभस्तिः श्रावणे मासे यमो भाद्रपदे तथा ॥ ५५ ॥ इषे सुवर्णरेताश्च कार्तिके च दिवाकरः। मार्गशीर्षे तपेन्मित्रः पौषे विष्णुः सनातनः ॥ ५६ ॥ पुरुषस्त्वधिके मासि मासाधिक्येषु कल्पयेत्। इति ते द्वादशादित्याः काश्यपेयाः प्रकीर्तिताः ॥ ५७ ॥ उग्ररूपा महात्मानस्तपन्ते विश्वरूपिणः।

धर्मार्थकाममोक्षाणां प्रस्फुटा हेतवो नृप ॥५८॥ सर्वपापहरं चैवमादित्यं संप्रपूजयेत् । एकधा दशधा चैव शतधा च सहस्रधा ॥५९॥ तपन्ते विश्वरूपेण सृजन्ति संहरन्ति च । एष विष्णुः शिवश्चैव ब्रह्मा चैव प्रजापतिः ॥ ६० ॥ महेन्द्रश्चैव कालश्च यमो वरुण एव च । नक्षत्रग्रहताराणामधिपो विश्व-

तापनः ॥ ६१ ॥ वायुरग्निर्धनाध्यक्षो भूत-
कर्ता स्वयं प्रभुः । एष देवो हि देवानां सर्व-
माप्यायते जगत् ॥६२॥ एष कर्ता हि भूतानां
संहर्ता रक्षकस्तथा । एष लोकानुलोकाश्च
सप्तद्वीपाश्च सागराः ॥ ६३ ॥ एष पाताल-
सप्तस्था दैत्यदानवराक्षसाः । एष धाता
विधाता च बीजं क्षेत्रं प्रजापतिः ॥६४॥ एक

एव प्रजा नित्यं संवर्धयति रश्मिभिः । एष यज्ञः स्वधा स्वाहा ह्रीः श्रीश्च पुरुषोत्तमः ॥ ६५ ॥ एष भूतात्मको देवः सूक्ष्मोऽव्यक्तः सनातनः । ईश्वरः सर्वभूतानां परमेष्ठी प्रजापतिः ॥ ६६ ॥ कालात्मा सर्वभूतात्मा वेदात्मा विश्वतोमुखः । जन्ममृत्युजराव्याधिसंसारभय-नाशनः ॥६७॥ दारिद्र्यव्यसनध्वंसी श्रीमान्

देवो दिवाकरः । विकर्तनो विवस्वांश्च मार्तण्डो भास्करो रविः ॥६८॥ लोकप्रकाशकः श्रीमाँल्लोक- चक्षुर्ग्रहेश्वरः । लोकसाक्षी त्रिलोकेशः कर्ता हर्ता तमिस्रहा ॥६९॥ तपनस्तापनश्चैव शुचिः सप्ताश्ववाहनः । गभस्तिहस्तो ब्रह्मण्यः सर्व- देवनमस्कृतः ॥७०॥ आयुरारोग्यमैश्वर्यं नरा- नार्यश्च मन्दिरे । यस्य प्रसादात्संतुष्टिरादित्य-

हृदयं जपेत् ॥७१॥ इत्येतैर्नामभिः पार्थ आदित्यं स्तौति नित्यशः । प्रातरुत्थाय कौन्तेय तस्य रोगभयं नहि ॥ ७२ ॥ पातकान्मुच्यते पार्थ व्याधिभ्यश्च न संशयः । एकसन्ध्यं द्विसन्ध्यं वा सर्वपापैः प्रमुच्यते ॥ ७३ ॥ त्रिसन्ध्यं जपमानस्तु पश्येच्च परमं पदम् । यदह्ना कुरुते पापं तदह्ना प्रतिमुच्यते ॥ ७४ ॥ यद्रात्र्या

कुरुते पापं तद्रात्र्या प्रतिमुच्यते। दद्रुस्फोटक-कुष्ठानि मण्डलानि विषूचिका ॥ ७५ ॥ सर्वव्याधिमहारोगभूतबाधास्तथैव च। डाकिनी शाकिनी चैव महारोगभयं कुतः ॥ ७६ ॥ ये चान्ये दुष्टरोगाश्च ज्वरातीसार-कादयः। जपमानस्य नश्यन्ति जीवेच्च शरदां शतम् ॥ ७८ ॥ संवत्सरेण मरणं यदा

तस्य ध्रुवं भवेत् । अशीर्षां पश्यति च्छायामहोरात्रं धनञ्जय ॥७८॥ यस्त्विदं पठते भक्त्या भानोर्वारे महात्मनः । प्रातःस्नाने कृते पार्थ एकाग्रकृतमानसः ॥ ७९ ॥ सुवर्णचक्षुर्भवति न चान्धस्तु प्रजायते । पुत्रबान्धवसम्पन्नो जायते चारुजः सुखी ॥ ८० ॥ सर्वसिद्धिमवाप्नोति सर्वत्र विजयी भवेत् । आदि-

त्यहृदयं पुण्यं सूर्यनामविभूषितम् ॥ ८१ ॥
श्रुत्वा च निखिलं पार्थ सर्वपापैः प्रमुच्यते ।
अतः परतरं नास्ति सिद्धिकामस्य पाण्डव
॥ ८२ ॥ एतज्जपस्व कौन्तेय येन श्रेयो
ह्यवाप्स्यसि । आदित्यहृदयं नित्यं यः पठे-
त्सुसमाहितः ॥ ८३ ॥ भ्रूणहा मुच्यते पापात्
कृतघ्नो ब्रह्मघातकः । गोघ्नः सुरापो दुर्भोजी

दुष्प्रतिग्रहकारकः ॥ ८४ ॥ पातकानि च सर्वाणि दहत्येव न संशयः । य इदं शृणुयान्नित्यं जपेद्वापि समाहितः ॥ ८५ ॥ सर्वपापविशुद्धात्मा सूर्यलोके महीयते । अपुत्रो लभते पुत्रान्निर्धनो धनमाप्नुयात् ॥ ८६ ॥ कुरोगी मुच्यते रोगाद्भक्त्या यः पठते सदा । यस्त्वादित्यदिने पार्थ नाभिमात्रजले स्थितः

॥ ८७ ॥ उदयाचलमारूढं भास्करं प्रणतः स्थितः। जपते मानवो भक्त्या शृणुयाद्वापि भक्तितः ॥ ८८ ॥ स याति परमं स्थानं यत्र देवो दिवाकरः। अमित्रदमनं पार्थ यदा कर्तुं समारभेत् ॥ ८९ ॥ तदा प्रतिकृतिं कृत्वा शत्रो-श्चरणपांसुभिः। आक्रम्य वामपादेन ह्यादि-त्यहृदयं जपेत् ॥ ९० ॥ एतन्मन्त्रं समाहूय

सर्वसिद्धिकरं परम् ॥ ॐ ह्रीं हिमालीढं स्वाहा ॥
ॐ ह्रीं निलीढं स्वाहा । ॐ ह्रीं आलीढं स्वाहा
। इति मन्त्रः । त्रिभिश्च रोगी भवति ज्वरी
भवति पञ्चभिः । जपेस्तु सप्तभिः पार्थ राक्ष-
सीं तनुमाविशेत् ॥ ९१ ॥ राक्षसेनाभिभूतस्य
विकाराञ्छृणु पाण्डव । गीयते नृत्यते नग्न
आस्फोटयति धावति ॥ ९२ ॥ शिवारुतं च

कुरुते हसते क्रन्दते पुनः । एवं संपीड्यते पार्थ यद्यपि स्यान्महेश्वरः ॥ ९३ ॥ किं पुनर्मानुषः कश्चिच्छौचाचारविवर्जितः । पीडितस्य न सन्देहो ज्वरो भवति दारुणः ॥ ९४ ॥ यदा चानुग्रहं तस्य कर्तुमिच्छेच्छुभङ्करम् । तदा सलिलमादाय जपेन्मन्त्रमिमं बुधः ॥ ९५ ॥ नमो भगवते तुभ्यमादित्याय नमो नमः ।

जयाय जयभद्राय हरिदश्वाय ते नमः ॥ ९६ ॥
स्नापयेत्तेन मन्त्रेण शुभं भवति नान्यथा ।
अन्यथा च भवेद्दोषो नश्यते नात्र संशयः
॥ ९७ ॥ अतस्ते निखिलः प्रोक्तः पूजां चैव
निबोध मे । उपलिप्ते शुचौ देशे नियतो वा-
ग्यतः शुचिः ॥ ९८ ॥ वृत्तं वा चतुरस्रं
वा लिप्तभूमौ लिखेच्छुचिः । त्रिधा तत्र

लिखेत्पद्ममष्टपत्रं सकर्णिकम् ॥ ९९ ॥ अष्ट-
पत्रं लिखेत्पद्मं लिप्तगोमयमण्डले । पूर्वपत्रे
लिखेत्सूर्यमाग्नेय्यां तु रविं न्यसेत् ॥ १०० ॥
याम्यायां च विवस्वन्तं नैर्ऋत्यां तु भगं न्य-
सेत् । प्रतीच्यां वरुणं विद्याद्वायव्यां मित्र-
मेव च ॥ १०१ ॥ आदित्यमुत्तरे पत्रे ईशा-
न्यां विष्णुमेव च । मध्ये तु भास्करं विद्यात्

क्रमेणैवं समर्चयेत् ॥ १०२ ॥ अतः परतरं नास्ति सिद्धिकामस्तु पाण्डव । महातेजः समुद्यन्तं प्रणमेत्स कृताञ्जलिः ॥ १०३ ॥ सकेसराणि पद्मानि करवीराणि चार्जुन । तिलतण्डुलयुक्तानि कुशगन्धोदकानि च ॥ १०४ ॥ रक्तचन्दनमिश्राणि कृत्वा वै ताम्रभाजने । धृत्वा शिरसि तत्पात्रं जानुभ्यां धरणीं

स्पृशेत् ॥ १०५ ॥ मन्त्रपूतं गुडाकेश चार्घ्यं दद्याद्गभस्तये । सायुधं सरथं चैव सूर्यमावाहयाम्यहम् ॥ १०६ ॥ स्वागतो भव । सुप्रतिष्ठितो भव । सन्निधो भव । सन्निहि- तो भव । संमुखो भव । इति पञ्चमुद्राः । स्फुट- यित्वाऽर्हयेत् सूर्यं भुक्तिं मुक्तिं लभेन्नरः ॥ ॥१०७॥ ॐ श्रीं विद्याकिलिकिलिकटकेष्टस-

र्वार्थसाधनाय स्वाहा। ॐ श्रीं ह्रीं ह्रूं हंसः सूर्याय नमः स्वाहा। ॐ श्रीं ह्रां ह्रीं ह्रूं हः सूर्यमूर्त्तये स्वाहा। ॐ श्रीं ह्रीं खं खः लोकाय सर्वमूर्त्तये स्वाहा। ॐ ह्रूं मार्तण्डाय स्वाहा। नमोऽस्तु सूर्याय सहस्रभानवे नमोऽस्तु वैश्वानरजातवेदसे। त्वमेव चार्घ्यं प्रतिगृह्ण देव देवाधिदेवाय नमो नमस्ते॥

१०८ ॥ नमो भगवते तुभ्यं नमस्ते जातवे-
दसे । दत्तमर्घ्यं मया भानो त्वं गृहाण नमो-
ऽस्तु ते ॥१०९॥ एहि सूर्य सहस्रांशो तेजो-
राशे जगत्पते । अनुकम्पय मां देव गृहाणा-
र्घ्यं नमोऽस्तु ते ॥११०॥ नमो भगवते तुभ्यं
नमस्ते जातवेदसे । ममेदमर्घ्यं गृह्ण त्वं देव-
देव नमोऽस्तु ते ॥ १११ ॥ सर्वदेवाधिदेवाय

आधिव्याधिविनाशिने । इदं गृहाण मे देव सर्वव्याधिर्विनश्यतु ॥ ११२ ॥ नमः सूर्याय शान्ताय सर्वरोगविनाशिने । ममेप्सितं फलं दत्त्वा प्रसीद परमेश्वर ॥ ११३ ॥ ॐ नमो भगवते सूर्याय स्वाहा । ॐ शिवाय स्वाहा । ॐ सर्वात्मने सूर्याय नमःस्वाहा ॥ ॐ अक्ष-य्यतेजसे नमः स्वाहा । सर्वसंकटदारिद्र्यं

शत्रुं नाशय नाशय । सर्वलोकेषु विश्वात्मन् सर्वात्मन् सर्वदर्शक ॥ ११४ ॥ नमो भगवते सूर्य कुष्ठरोगान् विखण्डय । आयुरारोग्यमैश्वर्यं देहि देव नमोऽस्तु ते ॥ ११५ ॥ नमो भगवते तुभ्यमादित्याय नमो नमः । ॐ अक्षय्यतेजसे नमः । ॐ सूर्याय नमः । ॐ विश्वमूर्त्तये नमः । आदित्यं च शिवं विद्याच्छिवमादि-

त्यरूपिणाम् । उभयोरन्तरं नास्ति आदित्य-
स्य शिवस्य च ॥ ११६ ॥ एतदिच्छाम्यहं
श्रोतुं पुरुषो वै दिवाकरः । उदये ब्रह्मणो रूपं
मध्याह्ने तु महेश्वरः ॥ ११७ ॥ अस्तमाने
स्वयं विष्णुस्त्रिमूर्तिश्च दिवाकरः । नमो
भगवते तुभ्यं विष्णवे प्रभविष्णवे ॥ ११८ ॥
ममेदमर्घ्यं प्रतिगृह्ण देव देवाधिदेवाय नमो

नमस्ते। श्रीसूर्यनारायणाय साङ्गाय सपरिवाराय इदमर्घ्यं समर्पयामि ॥ ११९ ॥ हिमघ्नाय तमोघ्नाय रक्षोघ्नाय च ते नमः। कृताघ-घ्नाय सत्याय तस्मै सूर्यात्मने नमः॥१२०॥ जयोऽजयश्च विजयो जितप्राणो जितश्र-मः। मनोजवो जितक्रोधो वाजिनः सप्त कीर्तिताः ॥ १२१ ॥ हरितहयरथं दिवाकरं कन-

कमयाम्बुजरेणुपिञ्जरम् । प्रतिदिनमुदये नवं नवं शरणमुपैमि हिरण्यरेतसम् ॥ १२२ ॥ न तं व्यालाः प्रबाधन्ते न व्याधिभ्यो भयं भवेत् । न नागेभ्यो भयं चैव न च भूतभयं क्वचित् ॥ १२३ ॥ अग्निशत्रुभयं नास्ति पार्थिवेभ्यस्तथैव च । दुर्गतिं तरते घोरां प्रजां च लभते पशून् ॥ १२४ ॥ सिद्धिकामो लभे-

त्सिद्धिं कन्याकामस्तु कन्यकाम् । एतत्पठे-
त्स कौन्तेय भक्तियुक्तेन चेतसा ॥ १२५ ॥
अश्वमेधसहस्रस्य वाजपेयशतस्य च । कन्या-
कोटिसहस्रस्य दत्तस्य फलमाप्नुयात् ॥
॥ १२६ ॥ इदमादित्यहृदयं योऽधीते सततं
नरः । सर्वपापविशुद्धात्मा सूर्यलोके महीयते
॥ १२७ ॥ नास्त्यादित्यसमो देवो नास्त्या-

दित्यसमा गतिः। प्रत्यक्षो भगवान्विष्णु-
र्येन विश्वं प्रतिष्ठितम् ॥१२८॥ नवतिर्योजनं
लक्षं सहस्राणि शतानि च। यावद्घटी-
प्रमाणेन तावच्चरति भास्करः ॥ १२९ ॥
गवां शतसहस्रस्य सम्यग्दत्तस्य यत्फलम्
॥ १३० ॥ तत्फलं लभते विद्वान् शान्तात्मा
स्तौति यो रविम्। ऽधीते सूर्यहृदयं सकलं

सफलं भवेत् । अष्टानां ब्राह्मणानां च
लेखयित्वा समर्पयेत् ॥ १३१ ॥ ब्रह्मलोके
ऋषीणां च जायते मानुषोऽपि वा ॥ जातिस्म-
रत्वमाप्नोति शुद्धात्मा नात्र संशयः ॥ १३२ ॥
अजाय लोकत्रयपावनाय भूतात्मने गोपतये
वृषाय । सूर्याय सर्वप्रलयान्तकाय नमो
महाकारुणिकोत्तमाय ॥ १३३ ॥ विव-

स्वते ज्ञानभृदन्तरात्मने जगत्प्रदीपाय जगद्धितैषिणे । स्वयंभुवे दीप्तसहस्रचक्षुषे सुरोत्तमायामिततेजसे नमः ॥ १३४ ॥ सुरैरनेकैः परिसेविताय हिरण्यगर्भाय हिरण्मयाय । महात्मने मोक्षपदाय नित्यं नमोऽस्तु ते वासरकारणाय ॥ १३५ ॥ आदित्यश्चार्चितो देव आदित्यः परमं पदम् । आदित्यो

मातृको भूत्वा आदित्यो वाङ्मयं जगत् ॥ ॥ १३६ ॥ आदित्यं पश्यते भक्त्या मां पश्यति ध्रुवं नरः । नादित्यं पश्यते भक्त्या न स पश्यति मां नरः ॥ १३७ ॥ त्रिगुणं च त्रितत्त्वं च त्रयो देवास्त्रयोऽग्नयः । त्रयाणां च त्रिमूर्तिस्त्वं तुरीयस्त्वं नमोऽस्तु ते ॥ १३८ ॥ नमः सवित्रे जगदेकचक्षुषे जगत्प्रसूतिस्थितिनाश-

हेतवे। त्रयीमयाय त्रिगुणात्मधारिणे विरिञ्चि-
नारायणशङ्करात्मने ॥ १३९ ॥ यस्योदयेनेह
जगत्प्रबुध्यते प्रवर्तते चाखिलकर्मसिद्ध-
ये। ब्रह्मेन्द्रनारायणरुद्रवंदितः स नः सदा
यच्छतु मङ्गलं रविः ॥१४०॥ नमोऽस्तु सूर्याय
सहस्ररश्मये सहस्रशाखान्वितसंभवात्मने।
सहस्रयोगोद्भवभावभागिने सहस्रसंख्यायुग-

धारिणे नमः ॥ १४१ ॥ यन्मण्डलं दीप्तिकरं विशालं रत्नप्रभं तीव्रमनादिरूपम् । दारिद्र्य-दुःखक्षयकारणं च पुनातु मां तत्सवितुर्वरे-ण्यम्॥ १४२ ॥ यन्मण्डलं देवगणैः सुपूजितं विप्रैः स्तुतं भावनमुक्तिकोविदम् । तं देवदेवं प्रणमामि सूर्यं पुनातु मां तत्सवितुर्वरेण्यम् ॥१४३ ॥ यन्मण्डलं ज्ञानघनं त्वगम्यं त्रैलो-

क्यपूज्यं त्रिगुणात्मरूपम् । समस्ततेजोमय-
दिव्यरूपं पुनातु मां तत्सवितुर्वरेण्यम्
॥ १४४ ॥ यन्मण्डलं गूढमतिप्रबोधं धर्मस्य
वृद्धिं कुरुते जनानाम् ॥ तत्सर्वपापक्षयकारणं
च पुनातु मां तत्सवितुर्वरेण्यम् ॥ १४५ ॥
यन्मण्डलं व्याधिविनाशदक्षं यदृग्यजुः-
सामसु संप्रगीतम् । प्रकाशितं येन च भूर्भुवः-

स्वः पुनातु मां तत्सवितुर्वरेण्यम् ॥ १४६ ॥
यन्मण्डलं वेदविदो वदन्ति गायन्ति यच्चारणा-
सिद्धसंघाः ॥ यद्योगिनो योगजुषां च संघाः
पुनातु मां तत्सवितुर्वरेण्यम् ॥ १४७ ॥ यन्म-
ण्डलं सर्वजनेषु पूजितं ज्योतिश्च कुर्यादिह
मर्त्यलोके । यत्कालकालादिमनादिरूपं
पुनातु मां तत्सवितुर्वरेण्यम् ॥ १४८ ॥

यन्मण्डलं विष्णुचतुर्मुखाख्यं यदक्षरं पापहरं जनानाम् ॥ यत्कालकल्पक्षयकारणं च पुनातु मां तत्सवितुर्वरेण्यम् ॥ १४९ ॥ यन्मण्डलं विश्वसृजां प्रसिद्धमुत्पत्तिरक्षाप्रलयप्रगल्भम् ॥ यस्मिन् जगत्संहरतेऽखिलं च पुनातु मां तत्सवितुर्वरेण्यम् ॥ १५० ॥ यन्मण्डलं सर्वगतस्य विष्णोरात्मा परं धाम विशु-

द्धतत्त्वम् ॥ सूक्ष्मान्तरैर्योगपथानुगम्यं पुनातु मां तत्सवितुर्वरेण्यम् ॥ १५१ ॥ यन्मण्डलं ब्रह्मविदो वदन्ति गायन्ति यच्चारणसिद्धसंघाः ॥ यन्मण्डलं वेदविदः स्मरन्ति पुनातु मां तत्सवितुर्वरेण्यम् ॥ १५२ ॥ यन्मण्डलं वेदविदोपगीतं यद्योगिनां योगपथानुगम्यम् ॥ तत्सर्ववेदं प्रणमामि सूर्यं पुनातु मां

तत्सवितुर्वरेण्यम् ॥ १५३ ॥ मङ्गलाष्टकमिदं पुण्यं यः पठेत्सततं नरः । सर्वपापविशुद्धात्मा सूर्यलोके महीयते ॥१५४॥ ध्येयः सदा सवितृमण्डलमध्यवर्ती नारायणः सरसिजासनसन्निविष्टः । केयूरवान् मकरकुण्डलवान् किरीटी हारी हिरण्मयवपुर्धृतशंखचक्रः ॥ १५५ ॥ सशंखचक्रं रविमण्डले स्थितं

कुशेशयाक्रान्तमनन्तमच्युतम् । भजामि बुद्ध्या तपनीयमूर्तिं सुरोत्तमं चित्रविभूषणोज्ज्वलम् ॥१५६॥ एवं ब्रह्मादयो देवा ऋषयश्च तपोधनाः । कीर्तयन्ति सुरश्रेष्ठं देवं नारायणं विभुम् ॥ १५७ ॥ वेदवेदाङ्गशरीरं दिव्यदीप्तिकरं परम् । रक्षोघ्नं रक्तवर्णं च सृष्टिसंहारकारकम् ॥ १५८ ॥ एकचक्ररथो यस्य

दिव्यः कनकभूषितः । स मे भवतु सुप्रीतः पद्महस्तो दिवाकरः ॥१५९॥ आदित्यः प्रथमं नाम द्वितीयं तु दिवाकरः । तृतीयं भास्करः प्रोक्तं चतुर्थं तु प्रभाकरः॥ १६० ॥ पञ्चमं तु सहस्रांशुः षष्ठं चैव त्रिलोचनः । सप्तमं हरिदश्वश्च अष्टमं च विभावसुः ॥ १६१ ॥ नवमं दिनकृत्प्रोक्तं दशमं द्वादशात्मकम् । ए-

कादशं त्रयीमूर्तिर्द्वादशं सूर्य एव च ॥ १६२ ॥
द्वादशादित्यनामानि प्रातःकाले पठेन्नरः ।
दुःस्वप्ननाशनं चैव सर्वदुःखं च नश्यति
॥१६३॥ दद्रूकुष्ठहरं चैव दारिद्र्यं हरते ध्रुवम् ।
सर्वतीर्थप्रदं चैव सर्वकामप्रवर्द्धनम् ॥ १६४ ॥
यः पठेत्प्रातरुत्थाय भक्त्या नित्यमिदं
नरः । सौख्यमायुस्तथाऽरोग्यं लभते मोक्ष-

मेव च ॥ १६५ ॥ अग्निमीले नमस्तुभ्यमि-
षेत्वोर्जे स्वरूपिणे । अग्न आयाहि वीतस्त्वं
नमस्ते ज्योतिषां पते ॥ १६६ ॥ शन्नो देवी-
नमस्तुभ्यं जगच्चक्षुर्नमोऽस्तु ते । पञ्चमायो-
पवेदाय नमस्तुभ्यं नमो नमः ॥१६७॥ पद्मा-
सनः पद्मकरः पद्मगर्भसम तिः । सप्ताश्व-
रथसंयुक्तो द्विभुजः स्यात्सदा रविः ॥१६८॥

आदित्यस्य नमस्कारं ये कुर्वन्ति दिने दिने ।
जन्मान्तरसहस्रेषु दारिद्र्यं नोपजायते ॥
॥ १६९ ॥ उदयगिरिमुपेतं भास्करं पद्महस्तं
निखिलभुवननेत्रं रत्नरत्नोपमेयम् । तिमि-
रकरिमृगेन्द्रं बोधकं पद्मिनीनां सुरवरमभि-
वन्दे सुन्दरं विश्ववन्द्यम् ॥ १७० ॥ इति श्री
भविष्योत्तरपुराणे श्रीकृष्णार्जुनसंवादे आ-

दित्यहृदयस्तोत्रं संपूर्णम् । श्रीसावितृसूर्य-
नारायणार्पणमस्तु ॥ शुभं भवतु ॥ श्रीरस्तु ॥
शान्तिरस्तु ॥



# अथ सूर्यसहस्रनामस्तोत्रं प्रारभ्यते ।

श्रीगणेशाय नमः ॥ ॐ नमः श्रीसूर्य्याय ॥
सुमन्तुरुवाच ॥ माघे मासि सिते पक्षे सप्त-
म्यां कुरुनन्दन । निराहारो रविं भक्त्या पूज-
येद्विधिना नृप: ॥ १ ॥ पूर्वोक्तेन जपेज्जाप्यं
देवस्य पुरतः स्थितः । शुद्धैकाग्रमना राजन्
जितक्रोधो जितेन्द्रियः ॥ २ ॥ शतानीक
उवाच ॥ केन मन्त्रेण जप्तेन दर्शनं भगवान्

व्रजेत् । स्तोत्रेण वापि सविता तन्मे कथय सुव्रत ॥ ३ ॥ सुमन्तुरुवाच ॥ स्तुतो नामस-हस्रेण यदा भक्तिमता मया । तदा मे दर्श-नं यातस्साक्षाद्देवो दिवाकरः ॥ ४ ॥ शता-नीक उवाच ॥ नाम्नां सहस्रं सवितुः श्रो-तुमिच्छामि ते द्विज । येन ते दर्शनं यातस्सा-क्षाद्देवो दिवाकरः ॥ ५ ॥ सुमन्तुरुवाच ॥

सर्वमङ्गलमाङ्गल्यं सर्वपापप्रणाशनम् । स्तो-
त्रमेतन्महापुण्यं सर्वोपद्रवनाशनम् ॥ ६ ॥
न तदस्तिभयं किञ्चिद्यदनेन च शाम्यति ।
ज्वरैर्विमुच्यते राजन् स्तोत्रेऽस्मिन्पठिते नरः
॥ ७ ॥ अन्ये च रोगाः शाम्यन्ति पठतः
शृणुतस्तथा । सम्पद्यन्ते यथा कामाः सर्व
एव यथेप्सिताः ॥ ८ ॥ य एतदादितः श्रुत्वा

संग्रामं प्रविशेन्नरः । स जित्वा समरे शत्रू-
नभ्येति गृहमक्षतः ॥ ९ वन्ध्यानां पुत्रज-
ननं भीतानां भयनाशनम् । भूतिकारि द-
रिद्राणां कुष्ठिनां परमौषधम् ॥ १० ॥ बाला-
नां चैव सर्वेषां ग्रहरक्षोनिवारणम् । पठेदेतद्धि
यो राजन् स श्रियं परमाप्नुयात् ॥ ११ ॥
स सिद्धस्सर्वसंकल्पः सुखमत्यन्तमश्नुते ।

धर्मार्थी लभते धर्मं सुखार्थी च सुखं तथा ॥ १२ ॥ राज्यं च राज्यकामैश्च पठितव्य-मिदं नरैः । विद्यावहन्तु विप्राणां क्षत्रियाणां जयावहम् ॥ १३ ॥ पश्वावहन्तु वैश्यानां शूद्राणां धर्मवर्द्धनम् । पठतां शृण्वतामेत-द्वनीति न संशयः ॥ १४ ॥ तच्छृणुष्व नृपश्रेष्ठ प्रयतात्मा ब्रवीमि ते । नाम्नां सहस्रं

विख्यातं देवदेवस्य भास्वतः ॥ १५ ॥
ॐ अस्य श्रीसूर्य्यसहस्रनामस्तोत्रमन्त्रस्य वेद-
व्यास ऋषिरनुष्टुप्छन्दः ॐ श्रीसविता देवता
अभीष्टसिद्ध्यर्थं जपे विनियोगः । ॐ विश्व-
रूपो विश्वसखो विश्वात्मा विश्वतोमुखः । विश्वे-
श्वरो विश्वयोनिर्नियतात्मा जितेन्द्रियः ॥ १ ॥ का-
लाश्रयः कालकर्त्ता महाकालविनाशनः । महा-

योगी महाबुद्धिर्महात्मा च महाबलः ॥२॥ प्रभु-
र्विभुर्भूतनाथो भूतात्मा भुवनेश्वरः । भुतभव्यो
भावितात्मा भूतान्तःकरणः शिवः ॥ ३ ॥
शरण्यः कमलानन्दो नन्दनो नन्दिवर्द्धनः ।
वरेण्यो वरदो योगी सुसंयुक्तः प्रकाशनः ॥४ ॥
प्राप्तयानः परप्राणः प्रीतात्मा प्रयतः प्रियः ।
नयस्सहस्रपात्साधुर्दिव्यकुण्डलमण्डितः ॥ ५ ॥

अव्यङ्गधारी धीरात्मा सविता वायु-वाहनः । समाहितमतिर्धाता विधाता कृत-मङ्गलः ॥ ६ ॥ कपर्दी कल्पकृद्रुद्रः सुधर्मा धर्मवत्सलः । समायुक्तो नियुक्तात्मा कृता-त्मा कृतिनां वरः ॥ ७ ॥ अविचिन्त्यवपुः श्रेष्ठः महायोगी महेश्वरः । कान्तः कामारि-रादित्यो नियतात्मा निराकुलः ॥ ८ ॥ कामः

कारुणिकः कर्त्ता कमलाकरबोधनः । सप्त-
सप्तिरचिन्त्यात्मा महाकारुणिकोत्तमः ॥ ९ ॥
सञ्जीवनो जीवनाथो जयो जीवो जगत्प-
तिः । अजयो विश्वनिलयः संविभागी वृषध्व-
जः ॥ १० ॥ वृषाकपी कल्पकर्त्ता कल्पान्त-
करणो रविः । एकचक्ररथो मौली सुरथो
रथिनां वरः ॥ ११ ॥ अक्रोधनो रश्मिमाली

तेजोराशिर्विभावसुः । दिनकृद्दिवकृद्देवो देव-
देवो दिवस्पतिः॥ १२ ॥ दीनानाथो हविर्होता
दिव्यबाहुर्दिवाकरः । यज्ञो यज्ञपतिः पूषा
स्वर्णरेताः परावरः ॥ १३ ॥ परापरज्ञस्तरणि-
रंशुमाली मनोहरः । प्राज्ञः प्रजापतिः सूर्य्यः
सविता विष्णुरंशुमान् ॥ १४ ॥ सदागति-
र्गन्धवहो विहितो विधिराशुगः । पतङ्गः पतगः

स्थाणुर्विहङ्गो विहगो वरः ॥१५॥ हर्यश्वो हरि-
ताश्वश्च हरिदश्वो जगत्प्रियः । त्र्यम्बक-
स्सर्वदमनो भावितात्मा भिषग्वरः ॥ १६ ॥
आलोकश्च त्रिलोकात्मा लोकालोको
नमस्कृतः । कालः कल्पान्तको वह्निस्तपनो
विश्वतापनः ॥ १७ ॥ विरोचनो विरूपाक्षः
सहस्राक्षः पुरन्दरः । सहस्ररश्मिर्मिहिरो

विधाता सुरभूषणाः ॥ १८ ॥ खड्गी प्रतर्दनो धन्यो हयगो वाग्विशारदः। श्रीमांश्च शिशिरो वाग्मी श्रीपतिः श्रीनिकेतनः ॥ १९ ॥ श्रीकण्ठः श्रीधरः श्रीशः श्रीनिवासो वसुप्रदः ॥२०॥ तीर्थः क्रियावान् सुनयो विलयो भक्तव-त्सलः। कीर्तिः कीर्तिकरो नित्यो कुण्डली कवची रथी ॥ २१ ॥ हिरण्यरेताः सप्ताश्वः प्रयता-

त्मा परन्तपः। बुद्धिमानमरः श्रेष्ठो रोचिष्णुः पाकशासनः॥२२॥ समुद्रो धनदो धाता मान्धाता कश्मलापहः। तमघ्नो ध्वान्तहा वह्निः होतान्तःकरणो गुहः॥२३॥ पशुमान् प्रयतानन्दो भूतेशः श्रीमतां वरः। नित्यादित्यो नित्यरथः सुरेशः सुरपूजितः॥ २४॥ अजितो विजयो जेता जङ्गमस्थावरात्मकः। जीवानन्दो नित्यगामी

विजेता विजयप्रदः ॥ २५ ॥ पर्जन्योऽग्नि-
स्थितिः स्थेयान् स्थविरोऽगुर्निरञ्जनः । प्रद्यो-
तनो रथारूढः सर्वलोकप्रकाशकः ॥ २६ ॥ ध्रुवो
मेधी महावीर्यो हंसः संसारतारकः । सृष्टि-
कर्त्ता क्रियाहेतुर्मार्त्तण्डो मरुतां पतिः ॥ २७ ॥
मरुत्वान् दहनस्त्वष्टा भगो भाग्योऽर्यमा
कपिः । वरुणेशो जगन्नाथः कृतकृत्यः सुलो-

चनः ॥ २८ ॥ विवस्वान्भानुमान्कार्य्यः कारणास्तेजसां निधिः । असङ्गगामी तिग्मांशुर्घर्मांशुर्दीप्तदीधितिः ॥ २९ ॥ सहस्रदीधितिर्ब्रध्नस्सहस्रांशुर्दिवाकरः । गभस्तिमान् दीधितिमान् धन्वी धाताऽतुलद्युतिः ॥ ॥३०॥ भास्करः सुरकार्यज्ञः सर्वज्ञस्तीक्ष्णदीधितिः । सुरज्येष्ठस्सुरपतिर्बहुज्ञो वचसां

पतिः ॥ ३१ ॥ तेजोनिधिर्बृहत्तेजा बृहत्की-
र्तिर्बृहस्पतिः । अहिमानूर्जितो धीमानामुक्तः
कीर्तिवर्द्धनः ॥ ३२ ॥ महावैद्यो गणपतिर्ग-
णेशो गणनायकः । तीव्रः प्रतापनस्तापिर्मा-
र्त्तण्डः सम्प्रतापनः ॥ ३३ ॥ कार्त्तस्वरो हृषी-
केशः पद्मानन्दोऽभिनन्दितः । पद्मनाभो मृता-
हारः स्थितिमान्केतुमान्नभः ॥ ३४ ॥ अना-

द्यन्तोऽच्युतो विश्वो विश्वामित्रो घृणी वि-
राट् । आमुक्तो मुक्तिजनकः कञ्चुकी विश्व-
भावनः ॥ ३५॥ अनिमित्तगतिः श्रेष्ठश्शरण्यः
सर्वतोमुखः । विगाहिरेणुरसहा समायुक्तः
समाहितः ॥ ३६ ॥ धर्म्मकेतुर्धर्मरति-
स्संहन्ता संयमो यमः। प्रणतार्त्तिहरो वादी क्र-
तुकालानलद्युतिः ॥ ३७॥ नभोविगाहनस्स-

त्योऽमितात्मा सुमनोहरः । हरी हरिर्हरो वायू
रिक्तः कान्ताऽनलद्युतिः ॥ ३८ ॥ सुखसेव्यो
महातेजा जगतामनुकारणम् । महेन्द्राभि-
ष्टुतः स्तोत्रं स्तुतिहेतुः प्रभाकरः ॥ ३९ ॥
सहस्रकर आयुष्मानरोगः सुखदः सुखी
४० ॥ व्याधिहा दुःखदस्सौख्यं कल्याणः
कल्पतां वरः । आरोग्यकारणः सिद्धिर्वृद्धि-

ऋद्धिर्बृहस्पतिः ॥ ४१ ॥ हिरण्यरेता आरोग्यो
विद्वान्शुद्धः बुधो महान् । प्राणवान् धृति-
मान्धर्म्मी धर्मकर्त्ता रुचिप्रदः ॥ ४२ ॥ सर्व-
प्रियस्सर्वसहस्सर्वशत्रुनिवारणः । प्रांशुर्वि-
द्योतनो द्योतस्सहस्राकिरणः कृतिः ॥ ४३ ॥
केयूरी भूषणोद्भावभासितो भसितोऽनलः ।
शरण्यार्त्तिहरो होता खद्योतः खगसत्तमः

॥ ४४ ॥ सर्वद्योतो भवद्योतस्सर्वद्युतिकरो मतः । कल्याणः कल्याणकरः कल्पः कल्पकरः कविः ॥ ४५ ॥ कल्याणकृत्कल्पवपुः सर्वकल्याणभाजनम् । शान्तिप्रियः प्रसन्नात्मा प्रशान्तः प्रशमः प्रियः ॥ ४६ ॥ उदारकर्म्मा सुनयः सुवर्चा दीर्घलोचनः । वर्चस्वी वर्चसस्स्वामी त्रैलोक्येशो वशानुगः ॥ ४७ ॥

तेजस्वी सूर्यसावर्णिर्वर्णाध्यक्षो बलिप्रियः ।
यशस्वी वेदनिलयः तेजस्वी प्रकृतिस्थितः
॥ ४८ ॥ आकाशगः शीघ्रगतिराशुगः श्रुति-
मान् खगः । गोपतिर्ग्रहदेवेशो गोमानेकः प्रभ-
ञ्जनः ॥ ४९ ॥ जनिता प्रजनो जीवो दीप-
स्सर्वप्रकाशकः । कर्मसाक्षी योगनित्यो नभ-
श्चारसुरान्तकः ॥ ५० ॥ रक्षोघ्नो विघ्नशमनः

किरीटी प्रशमः प्रियः । मरीचिमाली सुमतिः
कृतातिथ्यो विशोषकः ॥ ५१ ॥ शिष्टाचारः
सदाचारः स्वाचारश्चारतत्परः । मन्दारो
माठरो दण्डः चोभणः पत्तिणां गुरुः ॥ ५२ ॥
अविशिष्टो विशिष्टात्मा विधेयो ज्ञानशो-
भनः । श्वेतकान्तिर्महाश्वेतः सानुगो मोत्त-
दायकः ॥ ५३ ॥ सर्ववेदप्रगीतात्मा सर्ववेदाल-

यो लयः । वेदमूर्त्तिश्चतुर्वेदो वेदभृद्वेदपारगः ॥५४॥ क्रियावानाशितो विष्णुर्वरीयांश्च वरप्रदः। व्रतचारी व्रतधरो लोकबन्धुरलङ्कृतः ॥ ५५ ॥ अलङ्कारोऽक्षरो विद्यो विद्यावान् विदिताशयः। आकारो भूषणो भूष्यो विष्णुर्भुवनपूजितः ॥ ५६ ॥ चक्रपाणिर्वज्रधरस्सुरेशो लोकवत्सलः । साक्षीपतिर्महाबाहुः प्रकृतिर्वि-

कृतिर्गुणः ॥ ५७ ॥ अन्धकारो ग्रहश्रेष्ठः
युगावर्त्तो युगाधिकृत् । अप्रमेयस्सदा योगी
निरहङ्कार ईश्वरः ॥ ५८ ॥ शुभकृत शुभगः
शोभा शुभकर्म शुभप्रदः । सत्यवान्सत्यस-
ङ्कल्पः नकारो वृद्धिदोऽनलः ॥ ५९ ॥ वन-
भृद्धनदो बन्धुर्मतिमान् बलिनां वरः । अद-
ग्धानङ्गराडिन्द्रो पद्मयोनिर्गणेश्वरः ॥ ६० ॥

संवत्सरो ऋतुर्नेता कालचक्रप्रवर्तकः ।
पद्मेक्षणः पद्मयोनिः प्रभावानमरः प्रभुः
॥ ६१ ॥ सुमूर्त्तिस्सुमतिस्सोमो गोविन्दो
जगतां द्विजः । पीतवासाः कृष्णवासा
दिग्वासाऽदितिजो हरिः ॥६२॥ आदित्यो नैक-
रूपात्मा स्कन्दः परपुरञ्जयः । शक्तिमान्
शूलधृग्भास्वान्मोक्षहेतुरयोनिजः ॥ ६३ ॥

सर्वदर्शी जितादर्शी दुःस्वप्नस्य विनाशनः ।
माङ्गल्यकर्त्ता तरणी वेगवान्कश्मलापहः
॥ ६४ ॥ स्पष्टाक्षरो महामन्त्रः विशाखो
जयनः प्रियः । विश्वकर्म्मा महाशक्तिः
ज्योतिरीशो विहङ्गमः ॥ ६५॥ विचक्षणो दक्ष
इन्द्रः प्रत्यूहः प्रियदर्शनः । अखिलो वेद-
निलयः वेदविद्विदिताशयः ॥६६॥ प्रभाकरो

तमरिपुस्सुजनोऽरुणसारथिः। कुबेरस्सुरथस्स्क-
न्दो मिहिरो महितो गुरुः॥ ६७ ॥ ग्रहराजो
ग्रहपतिर्ग्रहनक्षत्रमण्डलः । भास्करस्स-
तनस्स्यन्दो नन्दनो नरवाहनः॥६८॥माङ्गल्योऽ
थ मंगलवान् मांगल्यो मंगलापहः। मांगल्ये
चारु चरितं शीर्णसर्वव्रतावती ॥ ६९ ॥ चतु-
र्मुखः पद्ममाली पूतात्मा प्रणतार्त्तिहा। अकि-

ध्वनः सत्यसन्ध्यो निर्गुणो गुणवाञ्छुचिः ॥ ७० ॥ सम्पूर्णः पुण्डरीकाक्षो विधियो-योगतत्परः । सहस्रीशः क्रतुपतिः सर्वस्य सुमतिस्सुवाग् ॥ ७१ ॥ स्ववाहनो माल्यदा-मा कृताहारो हरिप्रियः । ब्रह्मप्रचेता प्रथितः प्रतीतात्मा सुरालयः ॥७२॥ शताबिन्दुश्श-तमुखो गरीयांश्चाऽनलप्रभः । धीरो मत्ततरो

रिक्तः पुरुषः पुरुषोत्तमः ॥ ७३ ॥ विद्याराजाधिराजो हि विद्यावान् भूतिदः स्थितः । अनिर्देश्यवपुः श्रीमान् विपाप्मा बहुमंगलः ॥ ७४ ॥ स्वस्तिदः सुरथः स्वर्णमन्ताधारो निकेतनः । निर्द्वन्द्वो द्वन्द्वहा सर्गः सवर्गः संप्रकाशकः ॥ ७५ ॥ दयालुः सूक्ष्मधीः शान्तिः क्षेमा क्षेमस्थितिप्रियः । भूधरो भूपतिर्वक्ता

पवित्रात्मा त्रिलोचनः ॥ ७६ ॥ महावराहः
प्रियकृत् धाता भोक्ता भयप्रदः । चतुर्वेदधरोऽ-
चिन्त्यो विनिद्रो विदिताशयः ॥ ७७ ॥
चक्रवर्त्ती धृतिकरः सम्पूर्णार्थे महेश्वरः ।
विचित्ररथ एकाकी सप्तसप्तिः परावरः॥ ७८ ॥
सर्ववेदस्थितिकरः स्थितिस्थेयः स्थिति-
प्रियः । निष्कलः पुष्कलनिभः वसुमान्वा-

सर्वप्रियः ॥ ७९ ॥ वसुमान्वासवः स्वामी वसुधाता वसुप्रदः । बलवान् ज्ञानवन्तस्त्वं ॐकारस्त्रिषु संस्थितः॥ ८० ॥ संकल्पयोनिर्दिनकृद्भानुमान्कारणात्परः । नीलकण्ठो धनाध्यक्षः चतुर्वेदप्रियंवदः ॥ ८१ ॥ वषट्कारो हुतो होता स्वाहाकारो हुताहुतिः । जनार्दनो जनानन्दो नरो नारायणप्रियः ॥८२ ॥ सन्दे-

हृत्तपरो वायुः सदा सुरनमस्कृतः । विग्रही
विमलो बिन्दुः विशोको विमलद्युतिः ॥ ८३ ॥
द्योतितो द्योतनो विद्युद्विद्यावान् वारिदो
बलिः । ब्रह्मदो हिमदो होता कृष्णावर्त्मा
सभाजितः ॥ ८४ ॥ सावित्रीभावितो राजा
विस्तृतो सुघृणी विराट् । सप्तार्चिः सप्त-
तुरगः सप्तलोकनमस्कृतः ॥ ८५ ॥ सम्प-

त्नोऽथ जगन्नाथः सुमनाश्शोभनः प्रियः। सर्वा-
त्मा सर्वकृत्सृष्टिः सप्तिमान् सुसुखीप्रियः
॥ ८६ ॥ सुमेधा माधवो मेध्यो मेधावी मधुसू-
दनः । अंगिरागातिकालज्ञो धूमकेतुः सुके-
तनः ॥ ८७ ॥ सुखासुखप्रदस्सौख्यं कान्तः
कान्तिप्रदो मुनिः । सन्तापनः सन्तपन
आतपस्तपतिः पतिः॥ ८८ ॥ उस्रापतिः सह-

स्रांशुः प्रियकारी प्रियंकरः । प्रीतिर्विमन्यु-
रम्भोद्योजविनं जगतां पतिः ॥ ८९ ॥ जग-
त्पिता प्रीतमना सर्वखर्वगुहो चलः । सर्वगो
जगदानन्दो जगन्नेता सुरारिहा ॥ ९० ॥ श्रेयः
श्रेयस्करो ज्ञात उत्तमोत्तममध्यमाः । उत्तमो
मेरुमेघोघधारणो धरणीधरः ॥ ९१ ॥ धरा-
धरो धर्मराजो धर्माधर्मप्रवर्द्धकः । रथाध्य-

न्तो रथपतिः सुरमान्योमितानन: ॥ ९२ ॥
उत्तार उत्तरस्तारस्तारापतिरपांपतिः । पुण्य-
संकीर्तनः पुण्यो हेतुर्लोकप्रकाशकः ॥ ९३ ॥
स्वर्भानुर्विगतारिष्टो विष्टो हृष्टः सुकर्मकृत् । व्या-
धिप्रणाशनः न्तेमः सुरस्सर्वाजितां वरः ॥ ९४ ॥
एकनाथो रथाधीशः शनैश्चरपिता रविः ।
वैवस्वतगुरुर्मृत्युर्धर्मनित्यो महाबलः ॥ ९५ ॥

प्रणाशनो वियच्चारी प्रद्योतो द्योतितोनलः ।
सन्तापकृत् क्षेमवतः मंत्रमूर्त्तिर्महाबलः॥९६॥
श्रेष्ठात्मा सुप्रियः शम्भुर्मरुतामीश्वरेश्वरः ।
संसारगतिविच्छेत्ता संसारार्णवतारकः ॥९७॥
सप्तजिह्वस्सुसप्तार्चिः रत्नगर्भः पराजितः ।
धर्मकेतुरमेयात्मा धर्माधर्मप्रवर्तकः ॥ ९७ ॥
लोकसाक्षी लोकगुरुर्लोकेशश्छन्दवाहनः

॥ ९९ ॥ धर्मवृत्ताद्यवृत्तश्च धनुष्पाणि-र्धनुर्धरः॥ १०० ॥पिनाकधृङ्महामोहो नैक-मायो महासनः। वीरश्शक्तिमतां श्रेष्ठस्सर्व-शास्त्रभृतां वरः॥ १०१ ॥ ज्ञानगम्यो दुरा-राध्यो लोहितांगो विमर्द्दनः। अनन्तो धर्मदो नित्यो धर्म्मकृच्च त्रिविक्रमः॥ १०२ ॥भग-वान् स्वामिसविता अचलो नीललोहितः।

एको नैकगतिर्व्यासस्सविता समितिञ्जयः ॥ १०३ ॥ शार्ङ्गधन्वा नलो भीमस्सर्वप्रह-रणायुधः । अर्हं तु परमेष्ठी च कामपालो दिवि स्थितः ॥१०४॥ वदान्यो वासुकिर्वेधा अस्त्रधारी पराक्रमः । द्वापरः परमोदारः पर-ब्रह्मसुवर्चवान् ॥ १०५ ॥ उद्दिव्यवेशो मुकुटी पद्महस्तो दिवस्पतिः । स्मितः प्रसन्नवदनः

पद्मोदारनिभाननः ॥ १०६ ॥ सायंदिवा दिव्यवपुरनिर्देश्यो महारयः । महारथो महानीशः शेषसत्त्वं रजस्तमः ॥ १०७ ॥ घृताशी पेये प्रतीततमा विमर्श्यान्निर्णायस्थितिः । अहिंसकश्शुद्धगतिरद्वितीयो विमर्दनः ॥ १०८ ॥ सर्वदो धनदो मोक्षः विहारी बहुदायकः । चारु रात्रिहरो नाथा भगवान्सर्व-

गोऽव्ययः ॥ १०९ ॥ मनोहरवपुश्शुभ्रश्शो-
भनस्सुप्रभावनः । सुप्रभस्सुप्रभाकारस्सुनेत्रः
स्सुसभापतिः ॥ ११० ॥ राज्ञीप्रियश्शब्दक-
रो ग्रहेशास्तिमिरापहः ॥ सैंहिकेयो रिपु-
र्देवो वरदो वरनायकः ॥ १११ ॥ चतुर्भुजो
महायोगी योगीश्वरपतिस्तथा । एतत्ते स-
र्वमाख्यातं यन्मां त्वं परिपृच्छसि ॥ ११२ ॥

नाम्नां सहस्रं सवितुः पाराशर्यो यदाह मे ॥ धन्यं यशस्यमायुष्यं दुष्टदुःस्वप्ननाशनम् ॥ ११३ ॥ बन्धमोक्षकरञ्चैव सर्वदा भानुकीर्त्तनम् । यस्त्विदं शृणुयान्नित्यं पठेद्वा प्रयतो नरः ॥ ११४ ॥ अक्षयं फलमाप्नोति भवेत्तस्य प्रसादतः । नृपाग्नितस्करभयं व्याधिभ्यो न भयं भवेत् ॥ ११५ ॥ विजया

श्च भवेन्नित्यं श्रेयश्च परमाप्नुयात्। कीर्त्तिमा-न्सुभगो विद्वान्सुमुखः प्रियदर्शनः ॥ १५ ॥
भवेद्वर्षशतायुश्च सर्वव्याधिविवर्जितः। नाम्नां सहस्रं शमिदं सुमतिः पठेद्यः प्रातश्शुचिर्नियमवान्सुसमाधियुक्तः। दूरेण तं परिहरन्ति सदैव रोगा भीतास्सुपर्णमिव सर्वमहोरगेन्द्राः ॥

इति श्रीभविष्योत्तरपुराणे सप्तमोकल्पे भगवतः श्रीसूर्य्यस्य सहस्र-नामस्तोत्रं सम्पूर्णम् ॥ शुभमस्तु सिद्धिरस्तु ॥ ११ ॥

नमः श्रीसूर्याय। वसिष्ठ उवाच॥ स्तुवंस्तत्र ततः साम्बः कृशोधमनि सन्ततः। राजन्नाम-सहस्रेण सहस्रांशुं दिवाकरम ॥१॥ खिद्य-मानं तु तं दृष्ट्वा सूर्यः कृष्णात्मजं तदा। स्वप्ने तु दर्शनं दत्वा पुनर्वचनमब्रवीत् ॥२॥ श्रीसूर्य उवाच॥ साम्ब साम्ब महाबाहो शृणु जाम्बवतीसुत। अलं नामसहस्रेण पठस्वेमं

स्तवं शुभम् ॥ ३ ॥ यानि नामानि गुह्यानि पवित्राणि शुभानि च । तानि ते कीर्तयिष्यामि श्रुत्वा वत्सावधारय ॥ ४ ॥ विकर्तनो विवस्वाँश्च मार्तण्डो भास्करो रविः । लोकप्रकाशकः श्रीमान् लोकचक्षुर्ग्रहेश्वरः ॥ ५ ॥ लोकसाक्षी त्रिलोकेशः कर्ता हर्ता तमिस्रहा । तपनस्तापनश्चैव शुचिःसप्ताश्ववाहनः ॥ ६ ॥

गभस्तिहस्तो ब्रह्मा च सर्वदेवनमस्कृतः ।
एकविंशतिरित्येषस्तव इष्टः सदा मम ॥ ७ ॥
शरीरारोग्यदश्चैव धनवृद्धियशस्करः । स्तव-
राज इति ख्यातास्त्रिषु लोकेषु विश्रुतः ॥ ८ ॥
य एतेन महाबाहो द्वे सन्ध्यस्तमनोदये ।
स्तौति मां प्रयातो भूत्वा सर्वपापैः प्रमुच्यते
॥ ९ ॥ कायिकं वाचिकं चैव मानसं यच्च

दुष्कृतम् । तत्सर्वं विलयं याति तोयस्थं लवणं यथा ॥ १० ॥ तत्सर्वमेकजप्येन प्रणाश्यति ममाग्रतः । एष जप्यश्च होमश्च सन्ध्योपासनमेव च ॥ ११ ॥ बलिमन्त्रोऽर्घमन्त्रश्च धूपमन्त्रस्तथैव च । अन्नदाने तथा स्नाने प्रणिपात प्रदक्षिणे ॥ १२ ॥ पूजितोऽयं महामन्त्रः सर्वव्याधिहरः शुभः । एवमुक्त्वा तु

भगवान् भास्करो जगदीश्वरः ॥ १३ ॥ आमन्त्र्य कृष्णातनयं तत्रैवान्तरधीयत । साम्बोऽपि स्तवराजेन स्तुत्वा सप्ताश्ववाहनम् । पूतात्मा निरुजः श्रीमान् तस्माद्रोगाद्विमुक्तवान् ॥ १४ ॥ इत्यार्षे श्री साम्बपुराणे रोगापनयने श्री सूर्यवक्त्रविनिर्गतः स्तवराजः समाप्तः ।

* इति *

# आदित्यहृदयम्

सूर्यसहस्रनामस्तोत्रं सूर्यस्तवराजश्च ।

ते.

रोगापं

राजः स

